# इससे बढ़कर कौन !




नया

# बिग चीफ

फलों के स्वादवाली टॉफी

केला ♦ मैंगो ♦ ऑरेंज

पारले

# पूजार्थम् आगच्छतु

| | | |
|---|---|---|
| सुशीला - | हरिः ओम् भगिनि ! गृहे अस्ति वा भवती ? | Hello sister ! You are at home ! Fine ! |
| प्रेमा - | आम् । अस्मि । आगच्छतु । उपविशतु । कः विशेषः ? | Yes, I am. Come in, sit down. What news ? |
| सु - | श्वः मम गृहे सत्यनारायणपूजा अस्ति । तदर्थं भवतीम् आह्वातुम् आगतवती अहम् । | We are doing Sathyanarayana Pooja at our residence tomorrow. I have come to invite you. |
| प्रे - | अस्तु । आगमिष्यामि । पूजा कस्मिन् समये ? | Fine. I will join you. What time is the Pooja ? |
| सु - | पूजा प्रातः नववादने भविष्यति । पूजासमये एव आगच्छतु भवती । अनन्तरं मध्याह्नभोजनं समाप्य प्रत्यागन्तुं शक्यते । | At 9 O'clock in the morning. Please be there at Pooja time. Then you can have your lunch with us and get back. |
| प्रे - | क्षम्यतां भगिनि ! भोजनार्थं न तिष्ठामि अहम् । गृहे बहूनि कार्याणि सन्ति श्वः । | Sorry sister, I cannot stay for lunch. I have a good lot of work at home tomorrow. |
| सु - | कार्याणि सर्वदा भवन्ति एव खलु ! | Work will always be there at home. Isn't it so ? |
| प्रे - | तथा न भगिनि ! श्वः मम गृहं प्रति बान्धवाः आगमिष्यन्ति । तदर्थं कार्याणि अपि अधिकानि भवन्ति । | That is not it, sister. Some guests are expected tomorrow. So, there will be some extra work. |
| सु - | एवं वा ? तर्हि पूजासमये आगत्य प्रसादं स्वीकृत्य गच्छतु । | Is it so ? Then attend the Pooja, take the prasadam and get back. |
| प्रे - | अस्तु ! पूजासमये अवश्यम् आगमिष्यामि । | Fine, I will certainly be there. |

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अदृष्टचिटिका - | Lottery Ticket | नारिकेलजलम् - | Tender coconut |
| अवलम्बनम् - | Dependence | परशुः - | Axe |
| आरोपितवान् - | Planted | पूर्णोदरम् - | Bellyful |
| आवुत्तः - | Sister's husband | प्रतिमा - | Statue |
| उज्जीवितवती - | Saved from death | प्रवाहः - | Flood |
| उद्गच्छति - | Rises up | प्राहरत् - | Kicked |
| उद्धरतु - | Lift up | भञ्जितवती - | Broke |
| कण्डूयनम् - | Scratching sensation | भेरी - | Kettledrum |
| कपोतः - | Pigeon | मृत्युलेखः - | Testament |
| कांस्यम् - | Copper | युगपत् - | At once |
| केसरान्नम् - | A sweetened rice preparation | रजकः - | Washerman |
| | | वितर्दिका - | Pyol |
| कौशेयशाटिका - | Silk saree | विवृणोति - | Explains |
| क्रन्दनम् - | Lamentation | वेत्रम् - | Cane |
| गुहा - | Cave | व्याजः - | Excuse (N) |
| गोपयितुम् - | To conceal | शमयितुम् - | To quench/ To confort |
| चतुष्पथः - | Circle | | |
| जतुका - | Bat | शिलीन्ध्रम् - | Mushroom |
| जल्पनम् - | Gossip | श्मश्रुलः - | Beardedman |
| तक्षकः - | Carpenter | सकृत् - | Once |
| दोहनम् - | Milking | सीवनयन्त्रम् - | Sewing machine |




# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'



'नास्ति आरोग्यसमं भाग्यम्' इत्येतस्य वचनस्य विशिष्टं तात्पर्यम् अस्ति। पूर्वं कस्यचित् जनस्य आरोग्यं वैयक्तिकः विषयः आसीत्। किन्तु इदानीं तत् राष्ट्रियः विषयः जातः अस्ति। आरोग्यवान् पुरुषः न केवलं स्वकुटुम्बस्य, अपि तु स्वसमुदायस्य स्वदेशस्य च सम्पत्तिः इति वक्तुं शक्यते। इदानीं विविधैः देशैः अनुष्ठितानां कार्याणां परिणामतः आयुःप्रमाणं प्रवृद्धं दृश्यते, मरणसङ्ख्यायां ह्रासः दृश्यते, जनाः ७०-८० वर्षाणि जीवन्ति अपि।

एतस्य तात्पर्यम् एतत् न यत् जनाः अस्वस्थाः व्याधिग्रस्ताः वा न भवन्ति इति। बहूनां रोगाणां कारणं प्रायः बाह्यं भवति, न तु व्यक्तौ स्थितः शारीरकः दोषः। जलमालिन्यं, वायुमालिन्यम् इत्यादीनि रोगाणां कारणानि भवन्ति। आरोग्यविषये उपेक्षा अनारोग्यस्य अपरं कारणम्।

आरोग्यक्षेत्रे विद्यालयानाम् अध्यापकानां च विशिष्टं पात्रं भवितुम् अर्हति। बालाः दिनस्य अधिकं कालं विद्यालये यापयन्ति इत्यतः नैर्मल्यस्य आरोग्यस्य च विषये विशेषबोधनम् अध्यापकानां कर्तव्यम् एव भवति। 'पुस्तकानि टिप्पणीपुस्तकानि च सुन्दरैः आवरणैः, सुन्दरीभिः नामचिटिकाभिः अलङ्कुर्वन्तु' इति यत् इदानीं बोध्यते तत् स्थगनीयं तु नास्ति एव। प्रत्युत एतादृशैः वचनैः सहैव आरोग्यस्य महत्त्वादिकं बोधनीयम्, आरोग्यविषये दत्ताः सूचनाः बालैः परिपाल्यन्ते वा न वा इति परिशीलनीयं च।



एतादृशी प्रवृत्तिः छात्रान् अध्यापकान् चापि समूह-स्वास्थ्यचिन्तने प्रवर्तयति। बालाः आरोग्यनियमान् स्वयं पालयन्तः मातापितरौ तान् ज्ञापयन्तः सामूहिकस्वास्थ्यसन्देशं सर्वान् प्रापयितुम् अपि शक्नुवन्ति।

'बालाः एव देशस्य सम्पत्तिः' इति वचनं श्रूयते सर्वत्र। अतः एतस्याः सम्पत्तेः वर्धनार्थं योग्यं मार्गदर्शनं, हितकारितया तस्याः उपयोगः च करणीयः अस्ति इदानीम्।

सम्पुटः - ११ सप्टम्बर् - १९९४ सञ्चिका - ६

प्रतिकृतिमूल्यं रू. ४.०० • वार्षिकं ग्राहकशुल्कं रू. ४८.००



# नामनिर्वचनम् - १८

*[निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम् । नामपदेन अत्र सुबन्ताः विवक्षिताः । अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते । आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते ।]*

**गिरीशः -** गिरीशशब्दस्य त्रिधा: अर्थाः प्रसिद्धाः सन्ति । ते तावत् -

i) गिरेः कैलासस्य ईशः [गिरि + ईश] गिरीशः = शिवः । शिवः कैलासगिरौ वसति इति तु प्रसिद्धम् एव । अतः 'कैलासगिरेः स्वामी गिरीशः' इति प्रसिद्धः ।

ii) गिरीणां पर्वतानाम् ईशः [गिरि + ईश] गिरीशः = हिमालयपर्वतः । गिरिषु श्रेष्ठः हिमालयः इति तु लोकविदितम् । अतः सर्वपर्वतेषु श्रेष्ठः हिमालयः 'गिरीशः' इति उच्यते ।

iii) गिरां वाचां शास्त्राणां वा ईशः [गिर् + ईश] गिरीशः = बृहस्पतिः । देवगुरुः बृहस्पतिः वाचां पतिः इति विख्यातः । शास्त्राणाम् अपि प्रभुः सः । अतः सः वाक्पतित्वात् शास्त्रपारगत्वात् गिरीशः इति प्रसिद्धः ।

एतान् त्रीन् अपि अर्थान् हेमकोशः एवं निर्दिशति - '... गिरीशो वाक्पतौ हरे । अद्रिराजे ...' इति ।

**गिरिशः -** गिरिशः इति शिवस्य एव अपरं नाम । गिरिशशब्दस्य निर्वचनम् एवं दृश्यते -

i) गिरिः आश्रयत्वेन वसतित्वेन अस्य अस्ति इति, [गिरि + श] । गिरौ कैलासाख्यपर्वते शेते इति वा गिरिशः । शिवस्य वासस्थानम् आश्रित्य एषा व्युत्पत्तिः अस्ति ।

ii) 'गिरौ नित्यशुद्धमनसि शेते विराजते इत्यतः सः शिवः गिरिशः' इति तु आध्यात्मिकार्थिका व्युत्पत्तिः ।

iii) गिरिं त्रिगुणवृत्त्यात्मकं मनः श्यति = तनूकरोति, विशुद्धं करोति शरणागतभक्तसाधकानाम् इति [गिरि + शो (तनूकरणे) + डः*] गिरिशः ।

एवं व्युत्पत्तित्रयेण अपि शिवः एव निर्दिष्टः ।

[* ''डप्रत्ययः 'गिरौ डश्छन्दसि' (३.२.१५ वा.) इत्येतेन छन्दसि एव । क्वचित् भाषायाम् अपि प्रयोगः आशुशुक्षणिवत्'' इति वदति स्वामी ।]

**चक्रधरः -** धरति इति धरः । [धृ (धारणे) + अच्] चक्रस्य धरः चक्रधरः । भगवान् विष्णुः चक्रं धरति इति प्रसिद्धिः खलु लोके ? अतः सः चक्रधरः इति उच्यते ।

चक्रशब्दस्य व्युत्पत्तिः तु - क्रियते गतिरनेन इति [डु-कृञ् (करणे) + कः] चक्रम् । यस्य साहाय्येन गम्यते तत् चक्रम् इति उच्यते । तथा हि चक्रविषये मेदिनीकोशः - 'चक्रः कोकः पुमान्, क्लीबं व्रजे सैन्यरथाङ्गयोः । राष्ट्रे दम्भान्तरे कुम्भकारोपकरणास्त्रयोः । जलावर्तेऽपि ...' इति ।

**सूचना -** *भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु । निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः ।*

**सङ्केतः** - संस्कृतचन्दमामा, 'अक्षरम्', ८ क्रास्, गिरिनगरं II फेस्, बेङ्गलूरु - ५६० ०८५.

वार्ताविशेषः -

# उदयमानः देशः

उभौ नायकौ परस्परं पत्रं लिखितवन्तौ। तेन पत्रद्वयेन एव तयोः मैत्री आरब्धा। उभौ अपि नायकौ स्नेहेन परस्परयोः हस्तं गृह्णन्तौ निर्णीतवन्तौ यत् भाविनि काले एषा मैत्री सुदृढा भवेत् इति। पश्चिमैशियाव्यवहार-विषयं वयम् इतः पूर्वम् एव चन्दमामायाम् एव (नवम्बर् - १९९३) पठितवन्तः स्मः। पालिस्तैन्आविर्भावः कथं जातः इत्यपि वयं ज्ञातवन्तः स्मः। गते सप्टम्बर्मासे वाषिङ्गटन्नगरे ऐतिहासिकः सन्धिः प्रवृत्तः। एतदनुसारम् इस्रेल्देशेन मासत्रयाभ्यन्तरे पालिस्तैन्देशस्य पश्चिमभागे स्थितात् गाजास्ट्रिप्तः अपगन्तव्यम् आसीत्। एषः भूभागः २७ वर्षेभ्यः इस्रेल्- अधीनः आसीत्।



इस्रेल्देशेन यदा अपगम्यते तदा तत्र पालिस्तैन्देशेन स्वतन्त्रशासनम् आरब्धव्यम् आसीत्। किन्तु अन्तिमदिनाङ्कपर्यन्तं यावत् तन्नाम - डिसेम्बर्मासस्य १३ दिनाङ्कं यावत् - सन्धिः पूर्णतः कार्यान्वितः न जातः। एतावता तत्र अकस्मात् हिंसात्मकघटनाः अपि प्रवृत्ताः। एतस्य परिणामतः इस्रेल् - पालिस्तैन् विमोचन संस्थयोः मध्ये शान्तिचर्चाः अपि स्थगिताः अभवन्।

नार्वे देशस्य प्रयत्नस्य कारणतः वाषिङ्गटन्सन्धिः घटितः आसीत्। इस्रेल्देशेन पालिस्तैन्विमोचन संस्थायाः (पि.एल्.ओ.) अस्तित्वम् अङ्गीकृत्य तदीयं शासनम् अनुमन्तव्यम् इति, पालिस्तैन्-विमोचना-संस्थायाः अध्यक्षेण यासर्-अराफत्-महोदयेन इस्रेल्देशस्य स्वातन्त्र्यम् अङ्गीकुर्वता पत्रं लिखित्वा दातव्यम् इति च सन्धौ निरूपितम् आसीत्। एतादृशस्य सन्धेः निरूपणे नार्वेदेशस्यैव विशिष्टं पात्रम् आसीत्। सन्धिम् अङ्गीकुर्वता पक्षद्वयेन अपि

अमेरिकाध्यक्षस्य बिल् क्लिण्टन्वर्यस्य समक्षं सन्धिः हस्ताक्षरेण प्रमाणीकृतः आसीत्।

मासत्रयाभ्यन्तरे एव अधिकारस्य परिवर्तनं भविष्यति इति विश्वस्य सर्वे अपि जनाः प्रतीक्षमाणाः आसन्। किन्तु तेषां प्रतीक्षा सफला न जाता, यतः सन्धिः कार्यान्वितः न जातः। एतस्य कारणं तु डिसेम्बर्-मासे 'हेब्रान्मास्क' प्रदेशे प्रवृत्तः रक्तपातः, यस्मिन् च ३०-४० पालिस्तैन्-जनाः प्राणैः वियुक्ताः जाताः। एतया घटनया समग्रं विश्वं दिग्भ्रान्तम्। पालिस्तैन्-विमोचनसंस्थया चर्चायां भागग्रहणं निराकृतम्।




तस्मिन् प्रदेशे उद्रिक्तवातावरणं यदा शान्तं जातम्, तदा ईजिप्ट्देशः अत्यन्तम् आत्मीयतया पक्षद्वये अपि चर्चार्थं प्रेरणां पूरितवान्। ईजिप्ट्देशस्य राजधान्यां कैरोनगरे मे-मासस्य चतुर्थदिनाङ्के इस्रेल्देशस्य प्रधानी इज्यक् राबिन्महोदयः यासर् अराफत्महोदयः च सन्धिनिमित्तं पुनरपि हस्ताङ्कनं कृतवन्तौ। अष्टसु एव मासेषु पक्षद्वयस्य अपि नायकौ परस्परं करचालनं कृतवन्तौ।

मे-मासस्य दशमे दिनाङ्के १५० पालिस्तैन्-आरक्षकाः गाजास्ट्रिप्प्रदेशं प्रविष्टवन्तः। एतत् दृष्ट्वा पालिस्तैन्जनाः अतीव सन्तुष्टाः। अनन्तरं सप्ताहाभ्यन्तरे एव इस्रेल्सैन्येन स्वप्रधानकार्यालयः पि.एल्.ओ. कृते अर्पितः।

मे-मासस्य त्रयोदशदिनाङ्के पश्चिमतीरस्थे बेरिकोनगरे पि.एल्.ओ. कार्यकर्तारः आरक्षककार्यालयस्य अधिकारं स्वीकृत्य कार्यालयभवनस्य उत्तुङ्गे भागे ध्वजस्थापनं कृतवन्तः। एतस्मात् स्थानीयाः महता सन्तोषेण नृत्यं कृतवन्तः।

एवंप्रकारेण पालिस्तैन् देशरूपेण परिणतम् अभवत्। अक्टोबर्मासे सार्वजनीनं निर्वाचनं तत्र प्रचलिष्यति। निर्वाचनपर्यन्तम् अपि पि.एल्.ओ. नायकत्वे सर्वे व्यवहाराः प्रचलिष्यन्ति।

पालिस्तैन्विमोचनसंस्थया इस्रेल्देशेन च प्रपञ्चस्य सर्वे देशाः प्रार्थिताः यत् सुदीर्घकालस्य अनन्तरं पश्चिमैशियादेशे या शान्तिः स्थापिता, तस्याः संरक्षणार्थं सर्वैः देशैः यथाशक्ति सहकारः दातव्यः इति।



# अनर्थात् देशरक्षणम्

रणधीरनामकः राजा पूर्वं कर्पूरदेशं पालयति स्म । तस्य पुत्रः कदम्बः । कदम्बः बलशाली पराक्रमी च । किन्तु तस्य महान् अहङ्कारः ।

कवीनां पण्डितानां च विषये कदम्बस्य गौरवम् एव नास्ति । कलाविषये अभिमानः, साधुसंन्यासिनां विषये आदरः, दैवे विश्वासः च सर्वथा नास्ति कदम्बस्य । अस्मिन् जगति अहम् एव श्रेष्ठः इति चिन्तयन् कदम्बः महान्तं गर्वम् अनुभवति स्म ।

कदाचित् कश्चित् महानुभावः राजास्थानम् आगत्य महाराजं रणधीरं पृष्टवान् - ''महाराज ! सहस्रवर्षेषु एकवारं भवतः राज्ये महान् अनर्थः सम्भवति इति विषयं भवान् जानाति वा ?'' इति ।

महतः अनर्थस्य स्वरूपम् एवम् अस्ति - दुर्भरारण्यस्य समीपे कश्चन ग्रामः अस्ति । तस्य ग्रामस्य प्रवेशद्वारसमीपे उन्नता भेरी अस्ति । सहस्रवर्षेषु एकवारं सा भेरी स्वयं शब्दं करोति । तेन भयङ्करशब्देन भूमिः शिथिला भवति । राज्यस्थानि सर्वाणि भवनानि गृहाणि च पतन्ति ।

ग्रामतः दुर्भरारण्यं प्रति गमनमार्गस्य पार्श्वे कश्चन पातालकूपः अस्ति । तं कूपं प्रविष्टाः केऽपि बहिः न आगताः । स च कूपः पातालं प्रति गमनार्थं मार्गः । सहस्रवर्षेषु एकवारं तस्मात् कूपात् दशशिरस्कः विषसर्पः बहिः आगत्य तस्मिन् राज्ये विद्यमानान् मृगान् पक्षिणः च भक्षयति । विषसर्पस्य फूत्कारकारणतः विषं बहिः निस्सरति, तेन च विषेण राज्ये क्षेत्राणि, फलभरितवृक्षाः च नाशं प्राप्नुवन्ति ।

दुर्भरारण्ये भीकरनामकः राक्षसः कश्चित् निद्रां कुर्वन् भवति । सहस्रवर्षेषु सकृत् उत्थाय सः राज्ये विद्यमानान् सर्वान् मानवान् खादति, पुनरपि निद्रां करोति ।

''अनामिका''



एवंरूपेण कर्पूरदेशः सहस्रवर्षेषु एकवारं सर्वनाशं प्राप्य पुनरपि निर्मितः भविष्यति। पुनर्निर्माणार्थं न्यूनातिन्यूनं शतं वर्षाणि आवश्यकानि भवन्ति।

एतस्य अनर्थस्य विषये राजा रणधीरः जानाति। एतं विषयम् अधिकृत्य जनाः अपि वार्तालापं कुर्वन्ति स्म। तथापि एतं विषयं महानुभावस्य मुखतः श्रुत्वा राजा भीतः।

अनन्तरं सः महानुभावः पुनः रणधीरम् उक्तवान् - ''इतः मासद्वयाभ्यन्तरे सः अनर्थः सम्भविष्यति। स च पूर्णिमादिने एव सम्भविष्यति। एतं विषयं दिव्यदृष्ट्या ज्ञात्वा भवन्तं निवेदयितुम् आगतवान् अस्मि अहम्'' इति।

महानुभावस्य एतत् वचनं श्रुत्वा राजास्थाने उपविष्टः कदम्बः उपहासपूर्वकं हसन् खड्गं महानुभावम् उद्दिश्य क्षिप्तवान्। सः खड्गः भ्रमणं कुर्वन् गत्वा महानुभावस्य दण्डकमण्डल्वादिकम् अपातयत्।

तदा कदम्बः उक्तवान् - ''स्वविषयम् एव यः न जानाति सः राज्यस्य महतः अनर्थविषयं ज्ञातुं शक्नोति वा ? एतादृशेषु वचनेषु बुद्धिहीनाः विश्वासं कुर्युः, न तु कर्पूरदेशस्य राजा'' इति।

कदम्बस्य वचनं श्रुत्वा कुपितः सः महानुभावः दण्डकमण्डल्वादिकं स्वीकृत्य उत्थितवान्। अनन्तरं कदम्बं पश्यन् - ''महाराजानाम् अहङ्कारः अस्ति चेत् तादृशेभ्यः महाराजेभ्यः प्रतिक्षणम् अपि देशस्य अनर्थः एव भविष्यति। सहस्रवर्षेषु एकवारं यः अनर्थः सम्भवति, तस्य अनर्थस्य भवताम् अहङ्कारस्य च निवारणं मम कर्तव्यम्। इतः चतुर्थे दिने युवराजं कदम्बं सम्मुखीकर्तुं महावीरः कश्चित् आगमिष्यति। सः एव एतं देशं महतः अनर्थात् रक्षिष्यति च'' इति उक्त्वा ततः निर्गतवान्।

पुत्रः कदम्बः महानुभावेन शप्तः इति कारणतः रणधीरः खिन्नः।

महानुभावः राजधानीतः प्रस्थाय कञ्चित् ग्रामं गतवान्। तत्र कस्यचित् सामान्यगृहस्थस्य गृहे भिक्षां स्वीकृत्य गृहस्य स्वामिनम् उक्तवान् - ''भवतः आतिथ्येन अहम् अतीव सन्तुष्टः अस्मि। भवतः यदि कापि समस्या स्यात्, तर्हि वदतु। अहं भवतः

समस्यां परिहरिष्यामि'' इति।

तदा तद्गृहस्थः - ''स्वामिन्! मम एकः पुत्रः अस्ति। तस्य नाम विद्याधरः। सः सर्वथा अप्रयोजकः। 'अध्ययनं करोतु' इति अहं वदामि तम्। किन्तु सः तत् न इच्छति। सः वदति - 'अहं महावीरः भविष्यामि' इति। तर्हि सः वीरः भवेत् इति समाधानं प्राप्तुम् अपि न शक्नोमि। यतः मार्जारात् अपि भीतः भवति सः। खड्गस्य ग्रहणात् अतीव भयम् अनुभवति। अन्धकारदर्शनेन पिशाचानां कथाश्रवणेन चैव तस्य शरीरं कम्पते। किन्तु 'महावीरः' इति कीर्तिः सम्पादनीया इति तस्य महती इच्छा अस्ति। एतद्विषये किं करणीयं मया इति कृपया वदतु भवान्'' इति उक्तवान्।



एतत् श्रुत्वा महानुभावः उक्तवान् - ''भवतः पुत्रं मया सह प्रेषयतु। तं महावीरं कृत्वा भवतः समीपं प्रेषयामि'' इति।

गृहस्थः एतत् अङ्गीकृतवान्।

अनन्तरं सः महानुभावः विद्याधरेण सह राजधानीं प्रति प्रस्थितवान्। मध्येमार्गं सः विद्याधरम् उक्तवान् - ''अहं यत् वदामि, तथैव भवान् आचरति चेत् 'महावीरः' इति कीर्तिं प्राप्स्यति। किन्तु कञ्चित् कालं यावत् भवता धैर्येण खड्गः ग्रहीतव्यः। कदम्बेन सह युद्धं करणीयम्। भवान् भीतः मा भवतु। युद्धकरणेन अपि भवतः शरीरं व्रणितं न भवति। युद्धकरणम् अपि एकवारम् एव। पुनः कदापि भवतः जीवने खड्गग्रहणस्य आवश्यकता एव न भविष्यति'' इति।

''एकवारम् एव खड्गग्रहणं चेत् प्रयत्नं करोमि। अनन्तरं पुनः पुनः खड्गग्रहणं, युद्धकरणं च सर्वथा न शक्यते'' इत्युक्तवान् विद्याधरः भयेन एव।

अनन्तरं महानुभावः विद्याधरेण सह राजास्थानं गत्वा महाराजं रणधीरम् उक्तवान् - ''राजन्! दुर्भराण्यसमीपस्थे ग्रामे कश्चन शमीवृक्षः अस्ति। पूर्वं यदा कर्पूरदेशस्य सर्वनाशः जातः, तदा केचन तपः कृत्वा सहस्रवर्षस्य अनर्थं सर्वथा दूरीकर्तुम् इच्छन्तः तादृशीं शक्तिं सम्पाद्य तां च शक्तिं शवाकारेण शमीवृक्षे स्थापितवन्तः सन्ति। ते एव पिशाचरूपेण तत्र निवसन्तः तस्याः शक्तेः रक्षणं कुर्वन्तः सन्ति। तां शक्तिं सम्पादयितुं युवराजः कदम्बः एव समर्थः



इति मया चिन्तितम् आसीत्। किन्तु कदम्बः अहङ्कारेण मम अपमाननं कृतवान् इति कारणतः सः इदानीं तां शक्तिं सम्पादयितुम् समर्थः नास्ति। अतः एव सर्वत्र अन्विष्य महावीरम् एतम् आनीतवान् अस्मि। एतस्य नाम विद्याधरः। इदानीम् एव विद्याधरकदम्बयोर्मध्ये युद्धं प्रचलतु। यः जयं प्राप्नोति सः दुर्भरारण्यं प्रति गच्छति, अनर्थात् देशं रक्षति च। अतः इदानीम् एव स्पर्धाम् आयोजयतु'' इति।

विद्याधरः कदम्बश्च परस्परम् अभिमुखं स्थितवन्तौ। महानुभावस्य आज्ञानुसारं द्वयोः अपि मुखं कृष्णवर्णीयवस्त्रेण आच्छादितवन्तः सेवकाः। दर्शनार्थं नेत्रसमीपे वस्त्रस्य रन्ध्रद्वयम् अस्ति। द्वौ अपि समानं वेषं धृतवन्तौ।

स्पर्धा आरब्धा। केषुचित् एव क्षणेषु स्पर्धा समाप्ता अपि अभवत्। द्वयोर्मध्ये अन्यतरस्य खड्गः अधः पतितः, सोऽपि पतितवान्। एतत् दृष्ट्वा सर्वे अपि चिन्तितवन्तः यत् कदम्बः एव जयं प्राप्तवान् इति। किन्तु मुखस्थं कृष्णवर्णीयं वस्त्रं यदा अपनीतं तदा ज्ञातम् - विद्याधरः एव जयं प्राप्तवान् इति।

सर्वेऽपि आश्चर्यचकिताः। अपरक्षणे एव सर्वत्र विद्याधरस्य नाम्नः जयनिनादः श्रुतः।

अनन्तरं महानुभावः तौ उभौ अपि एकत्र रहस्यस्थानं नीत्वा उक्तवान् - ''मम तपश्शक्त्या भवतोः रूपं परस्परं परिवर्तितम् अभवत्। कदम्बः विद्याधरः जातः, विद्याधरः कदम्बः जातः। एतत् रहस्यं भवद्भ्यां ज्ञातं चेदपि बहिः प्रकटयितुं न इच्छतः भवन्तौ। विद्याधरः यावत् कदम्बरूपेण एव स्थातुम् इच्छति, तावत् कदम्बेन विद्याधररूपेण एव स्थातव्यम्। विद्याधररूपेण एव कदम्बः शमीवृक्षतः शक्तिं सम्पाद्य भेरीं विषसर्पं राक्षसं च समूलं नाशयेत्'' इति।

कदम्बरूपी विद्याधरः राजान्तःपुरे एव वासम् आरब्धवान्। वस्तुतः सः विद्याधरः इति न जानाति रणधीरः। रणधीरः कदम्बरूपिणं विद्याधरम् आहूय उक्तवान् - ''युद्धे पराजयं प्राप्तवान् इति खेदं मा अनुभवतु भवान्। पुनरपि भवान् खड्गं गृहीत्वा स्वस्य पराक्रमं प्रदर्शयतु। सकृत्

पराजयः प्राप्तः भवता इति कारणतः मन्त्रिकुमारः सेनाधिपतेः पुत्रश्च भवता सह युद्धं कर्तुं सन्नद्धाः सन्ति । तान् सर्वान् पराजित्य आत्मनः प्रसिद्धिं रक्षतु'' इति ।

एतत् श्रुत्वा विद्याधरः उक्तवान् - ''जयपराजयौ दैवाधीनौ । मम पराजयस्य कारणं प्रतिस्पर्धिनः प्राबल्यं न, अपि तु मम अहङ्कारः । अतः मया प्रथमतया अहङ्कारः जेतव्यः । अनन्तरम् एव अन्यैः सह युद्धम् । तदर्थम् अहं कञ्चन कालं यावत् विद्वज्जनानां सकाशात् शास्त्राभ्यासं कर्तुम् इच्छामि । पुराणकथाः शृणोमि । साधुसंन्यासिनः सादरं प्रणमामि'' इति ।



राजा रणधीरः पुत्रे जातं परिवर्तनं दृष्ट्वा अतीव सन्तुष्टः । विद्याधरः महाराजं यत् उक्तवान् तस्य कारणम् अस्ति । इदानीम् अपि खड्गग्रहणात् विद्याधरस्य महती भीतिः । अन्धकारात् अपि भीतिः । एतस्मात् भयात् आत्मानं कथमपि रक्षितुम् इच्छन् सः शास्त्रपठनादिव्याजम् उक्तवान् महाराजम् ।

प्रतिदिनं केचन वन्दिनः आगत्य कदम्बरूपिणं विद्याधरं प्रशंसन्ति स्म यत् - भवान् महावीरः बलशाली च इति । एतादृशीं प्रशंसां न सहते स्म विद्याधरः । पराक्रमी बलशाली च सन् अपि युवराजः प्रशंसां न इच्छति इति यत्, तेन सर्वे अपि पण्डिताः कवयः प्रजाः च तस्य सौजन्यस्य प्रशंसां कुर्वन्ति स्म । भटानां द्वारा प्रजानां कष्टनष्टादिकं ज्ञात्वा कदम्बरूपी विद्याधरः तेभ्यः दानादिकं कुर्वन् तेषां समस्याः परिहृतवान् । एतस्मात् कारणात् विद्याधरः अत्यन्तं प्रसिद्धः जातः ।

एवमेव केचन मासाः अतीताः ।

विद्याधररूपी कदम्बः शमीवृक्षस्थां शक्तिं सम्पाद्य कर्पूरदेशस्य त्रीन् अपि महतः अनर्थान् शाश्वतं दूरीकृत्य राजधानीं प्रत्यागतवान् ।

तस्मिन् समये एव तत्र आगतः महानुभावः विद्याधरम् उद्यानं नीत्वा उक्तवान् - ''अहङ्कारकारणतः कदम्बः महत्कार्यसाधनात् वञ्चितः अभवत् । तथापि सः एव कर्पूरदेशस्य युवराजः । महतः अनर्थात् देशस्य रक्षणं यत् अस्ति तत् केवलं विद्याधरस्य कर्तव्यम्'' इति ।

एतत् श्रुत्वा विद्याधररूपी कदम्बः

निरुत्साही जातः। यतः केनापि प्रकारेण महाराजपदवी आप्तव्या इति तस्य इच्छा। किन्तु युवराजत्वम् एव नास्ति चेत् महाराजपदवी कथं वा प्राप्येत!

तदा कदम्बरूपी विद्याधरः महानुभावं प्रार्थितवान् - "महात्मन्! वास्तविकरूपेण आवाम् अनुगृह्णातु" इति।

एतत् श्रुत्वा महानुभावः आश्चर्येण विद्याधरं पृष्टवान् - "महाराजपदवीं प्राप्तुम् इदानीं भवतः अवकाशः अस्ति। एतं सदवकाशं भवान् निराकरोति इत्यतः अहम् भावयामि यत् भवान् इतोऽपि कीर्तिं कामयते इति। इदानीं भवतः विषये समग्रे देशे प्रशंसाप्रतिष्ठादयः श्रूयन्ते। एतादृशीं कीर्तिं भवान् इच्छति खलु!" इति।

तदा विद्याधरः सविनयम् उक्तवान् - "महानुभाव! प्रतिदिनम् अपि सर्वे आगत्य मां महावीरः इति प्रशंसन्ति। मयि यत् नास्ति, मया यत्र न साधितं, तद्विषये जनानां प्रशंसनं सर्वथा न इच्छामि। तेन मया तृप्तिः न अनुभूयते। किन्तु कदम्बरूपेण एव अहं यथाशक्ति प्रजानाम् उपकारं कृतवान् अस्मि। तस्मात् कदम्बनाम्नि प्राप्तया कीर्त्या अहम् अतीव सन्तुष्टः अस्मि। परन्तु एतादृशी कीर्तिः वास्तविकरूपेण मया यथा प्राप्येत तथा मया परिश्रमः करणीयः। तदर्थं आवयोः रूपं यथापूर्वं परिवर्तयतु इति प्रार्थयामि" इति।

विद्याधरस्य वचनं श्रुत्वा महानुभावः तृप्त्या मन्दहासपूर्वकं च - "एकेन एव सन्दर्भेण कदम्बस्य अहङ्कारः अपगतः। भवतः अप्रयोजकत्वम् अपि निवारितम् अभवत्। अग्रिमकाले कदम्बः यदि भवतः पीडां जनयितुम् इच्छति, तर्हि भवतोः रूपं पुनरपि परिवर्तितं भविष्यति। अतः एतद्विषये भवद्भ्यां सदा जागरूकतया भवितव्यम्। यावज्जीवं सुखं जीवताम् भवन्तौ" इति उक्त्वा तयोः रूपं यथापूर्वं कृतवान्।

अनन्तरं महानुभावः ततः गतवान्।

अनन्तरकाले विद्याधरः कदम्बः च परस्परं सन्तोषेण बहुकालं जीवितवन्तौ।





# कीर्तिसिंहकथा - ३

(विचित्रवर्मा भूगर्भतः प्राप्तं देव्याः विग्रहं पण्डितानाम् अभिप्रायानुगुणम् अरण्ये एव देवालयं निर्माय तत्र प्रतिष्ठापितवान्। केषाञ्चन दिनानाम् अनन्तरं विचित्रवर्मणः पुत्रः जयवर्मा सिंहासनम् आरूढवान्। तस्य समीपस्थम् अपूर्वं हारं वशीकर्तुम् इच्छन् काम्बोजस्य राजा वरुणदत्तः कुतन्त्रम् आचरन् तदर्थं काञ्चित् नर्तकीं प्रेषितवान्। वरुणदत्तस्य कुतन्त्रं ज्ञात्वा विचित्रवर्मा उपायेन तं हारं रक्षितवान्। किन्तु एतं विषयं जयवर्मा न जानाति। विचित्रवर्मणः मरणानन्तरं तेन लिखितं पत्रमेकम् आनीय जयसेनः जयवर्मणे दत्तवान्।)

जयसेनस्य वचनं श्रुत्वा जयवर्मा दीर्घं निःश्वस्य - ''अत्र पितुः दोषः कोऽपि नास्ति। मद्विषयकं तस्य विश्वासं रक्षितुं न शक्तः अहम्। भवतु, चिन्ता नास्ति। मम पिता तम् अपूर्वं हारं कस्मै अपि न दत्तवान् स्यात् खलु! तस्य हारस्य उत्तराधिकारी मम अपि उत्तराधिकारी एव खलु!'' इति वदन् पेटिकातः पत्रम् उद्घाट्य पठितवान्।

पत्रे एवं लिखितम् आसीत् -

''वत्स! जय! मम व्यवहारेण भवान् खिन्नः न भवति इति मम विश्वासः अस्ति। तेन एव विश्वासेन अहम् अग्रिमं कार्यं निर्व्यूढवान्। सः अपूर्वहारः कुत्र स्थापितः अस्ति इति रहस्यं मां विना अन्यः कोऽपि न जानाति। जयसेनः अपि न जानाति। सः हारः कुत्र अस्ति इति भवतः ज्ञानार्थं केचन अंशाः केवलं मया उच्यन्ते।

जय! समस्तलोकैः अपि पूजनीया देवी



परमेश्वरी तु काचित् स्त्री । सा कं शरणं गतवती ? सः च कस्यां दिशि निवसति ? मानवानां जीवनाधारभूता पञ्चभूतेषु अन्यतमा च का ? पादमितेन परिमाणेन तस्याः परिमाणं कृतवान् जनः दातारं कियत् धनं प्रार्थितवान् ? वत्स ! अपूर्वहारप्राप्तियोगः यस्य अस्ति, सः एतेषां प्रश्नानाम् उत्तरं ज्ञास्यति । येन उत्तरं ज्ञायते सः केवलं लाभं प्राप्स्यति । सर्वं शुभं भवतु भवतः इति आशिषा अनुगृह्णन् भवदीयः पिता विचित्रवर्मा'' इति ।

पत्रं पठित्वा जयवर्मा सादरं तत् पत्रं नमस्कृत्य पुनरपि दन्तपेटिकायां स्थापितवान् । जयवर्मणः मरणानन्तरं बहवः तत् पत्रं पठित्वा भिन्नभिन्नप्रकारेण तस्य व्याख्यानं कृतवन्तः । परन्तु समीचीनः अर्थः केनापि न गृहीतः । अतः सः अपूर्वः हारः अपि केनापि न सम्पादितः । एवमेव पञ्च परम्पराः अतीताः । बहुधा चिन्तनेन अस्माकं महाराजस्य पिता चिन्तितवान् यत् - सः अपूर्वः हारः पूर्वस्यां दिशि अरण्यस्थे शक्तिदेवालये गुप्तरूपेण स्थापितः अस्ति इति । अनन्तरं च तत्र खननम् आरब्धम् अस्माकं महाराजस्य पित्रा । तस्मिन् समये विविधाः विघ्नाः उत्पन्नाः । अतः महाराजस्य पिता तं प्रयत्नं परित्यक्तवान् । अनन्तरकाले सिंहासनम् आरूढवान् अस्माकं महाराजः हारप्राप्त्यर्थं प्रयत्नं न कृतवान् एव'' इत्युक्त्वा किञ्चित् कालं विश्रम्य जयसेनः पुनरपि वक्तुम् आरब्धवान् - ''यदि तम् अपूर्वं हारं मम पुत्रः एव प्राप्नुयात् तर्हि वरम् इति महाराजस्य आशयः । भवत्याः मेधाशक्तिविषये महाराजस्य महान् विश्वासः अस्ति । कीर्तिसिंहः अपि बुद्धिमान् । पूर्वदिशि स्थिते अरण्यस्थे शक्तिदेवालये कीर्तिसिंहस्य बन्धनं भवत्या करणीयम् इति महाराजः साग्रहं वदन् अस्ति यत् तेन ऊहितुं शक्यते यत् तस्य आशयः एवमेव स्यात् इति'' इति ।

पितुः वचनं श्रुत्वा शक्तिसेना अङ्गीकारपूर्वकं शिरः चालयन्ती उक्तवती - ''तात ! विषयं गूढशैल्या वदता महाराजेन मम प्रथमा परीक्षा आयोजिता इति भाति'' इति ।

तदा जयसेनः हसन् - ''एतस्यां

प्रथमपरीक्षायां भवती तु उत्तीर्णा एव खलु ?'' इति पृष्टवान्।

शक्तिसेना मन्दहासं प्रकटय्य मौनं स्थितवती।

अनन्तरदिने जयसेनः राजप्रासादस्य मुख्यद्वारसमीपं यदा गतवान्, तदा तत्रत्याः भटाः तम् उक्तवन्तः यत् महाराजः भवन्तं प्रतीक्षमाणः अस्ति इति। तत् श्रुत्वा जयसेनः अनुक्षणं महाराजं द्रष्टुं गतवान्। मन्दहासपूर्वकं महाराजं नमस्कृतवान् च।



तदा महाराजः जयसेनं पृष्टवान् - ''जयसेन ! भवतः पुत्रीम् एकाकितया प्रेषयितुं भवान् अङ्गीकृतवान् खलु !'' इति।

महाराजस्य एतत् वचनं श्रुत्वा जयसेनः सङ्कोचम् अनुभवन् उक्तवान् - ''प्रभो ! शक्तिसेनाविषये अधिकवात्सल्यं प्रदर्शयता पित्रा च सता मया ह्यः किञ्चिदिव अधिकं भाषितं भवता सह। किन्तु भवतः गमनानन्तरं शक्तिसेनया सह वार्तालापं कृत्वा भवतः आशयं ज्ञातवान् अहम्। मम पुत्री शक्तिसेना शुक्लचतुर्दश्याम् एव प्रस्थाय मध्येमार्गं राजकुमारेण मिलित्वा स्वकीयं कार्यं निर्वक्ष्यति'' इति।

तदा सुषेणः सगाम्भीर्यम् उक्तवान् - ''जयसेन ! भवान् मम आशयं ज्ञातवान् इति तु मम महान्तं सन्तोषं जनयति। किन्तु किमर्थं मया त्वरा क्रियते इत्यपि वदामि। शृणोतु तावत् -

''मम पूर्वजः जयवर्मा यद्यपि अपूर्वं हारं न प्राप्तवान्, तथापि उत्तमरूपेण राज्यपालनं कृतवान्। अतः एव दक्षिणे कोसलः समृद्धः जातः। काम्बोजे वरुणदत्तः राज्यस्य उन्नतिं साधयितुम् इच्छन् अपि विवेकहीनतया व्यवहृतवान् इति कारणतः काम्बोजस्य अभिवृद्धिः मन्दगत्या प्राचलत्। वरुणदत्तस्य जीवितावधेः अन्तिमदिनेषु सः गूढचराणां द्वारा ज्ञातवान् यत् - नर्तक्याः द्वारा अपहृतः हारः कृत्रिमः, वास्तविकः अपूर्वहारः वृद्धराजेन कुत्रापि रहस्येन स्थापितः अस्ति इति। अनन्तरं सः दिवङ्गतः। किन्तु अनन्तरकालीनाः काम्बोजराजाः एतं विषयं ज्ञात्वा कोसलदेशेन सह शत्रुत्वं साधयन्तः सन्ति। शक्त्या युक्त्या वा सः अपूर्वहारः प्राप्तव्यः इति काम्बोजराजानां चिन्तनम्। किन्तु हारः कुत्र अस्ति इति कोसलराजाः एव



न जानन्ति इति कारणतः अद्यपर्यन्तं किमपि कर्तुम् अशक्ताः जाताः ते।

प्रकृतं वरुणदत्तस्य उत्तराधिकारी गरुडदत्तः काम्बोजं पालयन् अस्ति। गरुडदत्तः हारविषये पितुः अपेक्षया पितामहस्य अपेक्षया च दुराग्रहपीडितः अस्ति इति वार्ता अस्माकं गूढचराणां द्वारा ज्ञाता अस्ति। न केवलं तावत्, हारः न प्राप्यते चेत् हारः कुत्र अस्ति इति विषये विचित्रवर्मणा लिखितं पत्रं वा प्राप्तव्यम् इति चिन्तयन् अस्ति गरुडदत्तः। पत्रस्य वशीकरणार्थं गरुडदत्तेन प्रेषिताः द्वित्राः गुप्तचराः अस्माभिः बद्धाः। एतत् ज्ञात्वा कुपितः गरुडदत्तः कुतन्त्रम् आचरितुं यतमानः अस्ति। तस्य कुतन्त्रं कीदृशं स्यात् इति इतोऽपि न ज्ञातम् अस्माभिः। एवं स्थिते 'यावच्छीघ्रं सः हारः अस्माभिः प्राप्तव्यः। अनन्तरं काम्बोजस्य आक्रमणं करणीयम्' इति मम आशयः। अतः एव - 'महानुभावेन कृष्णचन्द्रेण युवराजस्य कीर्तिसिंहस्य प्रयाणार्थं यः मुहूर्तः निश्चितः सः एव मुहूर्तः एतस्य महत्कार्यस्य शुभारम्भाय अपि भवतु। तदनुसारं च कृष्णचन्द्रस्य गुरुकुलात् प्रस्थितः कीर्तिसिंहः पूर्वदिशं प्रति नेतव्यः' इति चिन्तितं मया। भवतः पुत्र्याः चातुर्यं बुद्धिमत्तां च ज्ञात्वा अहं चिन्तितवान् यत् शक्तिसेना कीर्तिसिंहस्य सहपथिका भवतु इति। इदानीं भवतः संशयः परिहृतः इति भावयामि'' इति।

एतत् श्रुत्वा जयसेनः अङ्गीकारपूर्वकं शिरः चालयन् पृष्टवान् - ''प्रभो! युवराजः हारविषयं जानाति वा?'' इति।

तदा सुषेणः - ''पूर्वजानां हारः कश्चन अस्ति इति, स च कुत्रापि गुप्तरूपेण स्थापितम् अस्ति इति च जानाति युवराजः। ततोऽपि अधिकं विवरणं न जानाति'' इति वदन् स्ववक्षे रहस्यरूपेण स्थापितां काञ्चित् दन्तपेटिकां निष्कास्य जयसेनाय यच्छन् उक्तवान् - ''सर्वान् विषयान् पुत्रीं सविवरणम् उक्त्वा भवता सा वक्तव्या यत् - एषा दन्तपेटिका सुरक्षितं नीत्वा भवत्या युवराजाय कीर्तिसिंहाय दातव्या इति। अनन्तरं अग्रे किं करणीयम् इति तौ एव निर्णयं कुरुतः'' इति।

अनन्तरं जयसेनः ततः गतवान्।



शक्तिसेनायाम् आशाम् उत्पादितवान् वा अहम् इति चिन्ता मम'' इति।

पत्युः वचनं श्रुत्वा वैष्णवीदेवी हसन्ती उक्तवती - ''आकाशस्य राजा राज्ञी च कौ ? वदतु'' इति।

अप्रस्तुतं किमपि वदन्तीं पत्नीम् आश्चर्येण पश्यन् महाराजः पृष्टवान् - ''किमर्थम् अस्मिन् सन्दर्भे एषः प्रश्नः?'' इति।

तदा अपि वैष्णवीदेवी मन्दहासपूर्वकम् एव उक्तवती - ''सन्दर्भोचितः एव एषः प्रश्नः। एतस्य प्रश्नस्य समाधानम् आवयोः पुत्रः, तस्य भाविनी पत्नी च केवलं जानीतः'' इति।

''कीर्तिसिंहस्य भाविनी पत्नी वा ? का सा ?'' इति आश्चर्येण पृष्टवान् सुषेणः।

तदा वैष्णवीदेवी उक्तवती - ''अन्या का स्यात् ? शक्तिसेना एव। प्रभो! शक्तिसेना कीर्तिसिंहस्य बाल्यसखी इति विषयः विस्मृतः वा भवता ? कीर्तिसिंहः इदानीम् अपि शक्तिसेनां स्मरति। अहं यदा यदा कीर्तिसिंहं द्रष्टुं गुरुकुलं गच्छामि स्म, तदा तदा सः शक्तिसेनायाः योगक्षेमं विचारयति स्म सः। शक्तिसेना अपि भवतः वचनम् अङ्गीकृतवती यत् तस्य कारणं कीर्तिसिंहः एव। भवान् चिन्तां मा करोतु। शक्तिसेना एव आवयोः स्नुषा भविष्यति'' इति।

महाराज्ञ्याः वचनं श्रुत्वा सुषेणस्य आतङ्कः परिहृतः जातः। अनन्तरं सः राज्ञीम् उद्दिश्य - ''आकाशस्य राजा राज्ञी च कौ इति भवत्या पृष्टं खलु! तस्य उत्तरं न ज्ञातं मया''

तस्मिन् दिने रात्रौ बहुकालं यावत् सुषेणः निद्राम् एव न प्राप्तवान्। एतत् ज्ञात्वा महाराज्ञी वैष्णवीदेवी सातङ्कं निद्रायाः अप्राप्तेः कारणं पतिं पृष्टवती।

तदा महाराजः विषयं गोपयितुम् अनिच्छन् शक्तिसेनाविषयं महाराज्ञीं निवेद्य उक्तवान् - ''पित्रा अत्यन्तं प्रीत्या पालितां तरुणीम् एकाकितया प्रेषयन् अस्ति इति यत् तद्विषये न कापि चिन्ता मम। सर्वकार्येषु अपि शक्तिसेना समर्था अस्ति। किन्तु यदि सा जयं प्राप्नोति, तर्हि तां मम स्नुषात्वेन स्वीकरोमि इति मया वचनं दत्तम् अस्ति। शक्तिसेनाविषये कीर्तिसिंहस्य अभिप्रायः कः इति न जानामि अहम्। कीर्तिसिंहः यदि तां न इच्छति, तर्हि किं करोमि अहम् ? वृथा



इति उक्तवान्।

तदा वैष्णवीदेवी मन्दहासपूर्वकम् उक्तवती - "एतस्य प्रश्नस्य उत्तरं भवान् भाविनीं स्नुषाम् एव पृष्ट्वा जानातु" इति।

अनन्तरं सुषेणः निरातङ्कं निद्रां कृतवान्।

अत्र कोसले सुषेणस्य चिन्तनम् एवं प्रचलति सति, तत्र काम्बोजे गरुडदत्तः कुतन्त्रप्रकारान् चिन्तयन् आसीत्। अस्मिन् सन्दर्भे तस्य कुतन्त्रचिन्तनक्षेत्रम् अपरौ द्वौ प्रविष्टवन्तौ। तयोर्मध्ये एकः नगदेशस्य राजा नागकर्णः। नागकर्णः गरुडदत्तस्य श्यालः अपि। द्वितीयः चाक्यदेशस्य राजा कुण्डिनवर्मा।

गरुडदत्तः गुप्तचराणां द्वारा कुतन्त्रं कुर्वन् अपि द्वित्रवारम् अपजयं प्राप्तवान् आसीत्। अतः सः - 'इदानीम् अन्येषाम् अपि केषाञ्चन साहाय्यं प्राप्य सः हारः कथमपि वशीकरणीयः' इति चिन्तितवान् आसीत्। तदर्थं सः प्रथमं श्यालं नगदेशाधिपतिं नागकर्णं सम्पृक्तवान्। नागकर्णः विषयं ज्ञात्वा गरुडदत्तं सूचितवान् - 'मम स्नेहितः चाक्यदेशस्य राजा अपि एतादृशविषये उत्सुकः अस्ति। अन्यच्च तस्य प्रभूतं भिल्लसैन्यम् अपि अस्ति। अतः भवान् तम् अपि सकृत् पश्यति चेत् वरम्" इति।

गरुडदत्तः एतत् अङ्गीकृतवान्।

अनन्तरं कदाचित् उत्सवसमये नागकर्णः कुण्डिनवर्मा गरुडदत्तः च काम्बोजे मिलित्वा केन प्रकारेण हारः वशीकरणीयः इति विषयम् अधिकृत्य समालोचनम् आरब्धवन्तः।

ते चिन्तितवन्तः यत् हारः गरुडदत्तेन स्वीकरणीयः। नागकर्णः कुण्डिनवर्मा च कोसलदेशं समभागेन विभज्य स्वीकुर्याताम् इति। किन्तु तेषु एकैकोऽपि मनसि एव निर्णीतवान् - 'अन्यौ उभौ अपि वञ्चयित्वा हारः कोसलदेशश्च वशीकरणीयः' इति। अनन्तरं ते त्रयः अपि कोसलस्य स्वायत्तीकरणविषयं चर्चितवन्तः।

"अस्माकं त्रयाणां सैन्यशक्तिः यावती अस्ति, तावती सैन्यशक्तिः कोसलस्य एकस्य एव अस्ति। एतद्विषये अस्माभिः गम्भीरतया चिन्तनीयम् अस्ति" इति उक्तवान् नागकर्णः।

"न केवलं तावत् । श्वः कृष्णप्रतिपत् । श्वः कीर्तिसिंहः गुरुकुलात् राजधानीं प्रति गमिष्यति । अस्माकम् आक्रमणसमये कीर्तिसिंहः एव अस्मान् यदि सम्मुखीकरोति, तर्हि वयं सुलभतया कार्यं साधयितुं न शक्नुयाम" इति उक्तवान् कुण्डिनवर्मा ।

तयोः वचनं श्रुत्वा गरुडदत्तः पृष्टवान् - "तर्हि सः कीर्तिसिंहः पूर्वमेव मारितः चेत् कथम् ?" इति ।

"तत् कथम् ?" इति उभौ अपि कुतूहलेन पृष्टवन्तौ ।

तदा गरुडदत्तः उक्तवान् - "चतुरान् शक्तियुतान् त्रीन् भटान् प्रेषयाम वयम् । ते त्रयः भटाः वञ्चनया मध्येमार्गं कीर्तिसिंहं मारयिष्यन्ति । कीर्तिसिंहस्य मरणवार्तां श्रुत्वा कोसले सर्वे अपि शोकतप्ताः भविष्यन्ति । तदा वयं हठात् कोसलस्य उपरि आक्रमणं करिष्यामः" इति ।

एतत् श्रुत्वा नागकर्णः उक्तवान् - "एतस्य अपेक्षया अपि अन्यः उत्तमः उपायः अस्ति । वञ्चनया कीर्तिसिंहस्य बन्धनं कृत्वा अनन्तरं 'हारं ददातु अस्मभ्यम्, नो चेत् भवतः पुत्रं मारयामः' इति सुषेणं भाययाम" इति ।

तदा कुण्डिनवर्मा उक्तवान् - "आम् । एषः एव उत्तमः उपायः । हारः कुत्र अस्ति इति न जानीमः वयम् । सुषेणस्य तु पुत्रविषये अतीव वात्सल्यम् । कीर्तिसिंहः मृतः इति, स च अस्माभिः एव मारितः इति च सुषेणः जानाति चेत् हारस्थानस्य अन्वेषणार्थं विद्यमानान् आधारान् अपि नाशयेत् सुषेणः । पुत्रस्य प्राणरक्षणार्थं चेत् अवश्यं हारं दास्यति सः । अस्माकं हस्तं प्रति हारस्य आगमनानन्तरं कीर्तिसिंहं मारयाम" इति ।

कुण्डिनवर्मणः वचनं नागकर्णः गरुडदत्तः च सन्तोषेण अङ्गीकृतवन्तौ । अनन्तरं च ते निर्णीतवन्तः यत् - बलशालिनः त्रीन् भटान् प्रेषयित्वा, कीर्तिसिंहस्य बन्धनं कारणीयम् । उन्मादजनकम् औषधं पाययित्वा सः कीर्तिसिंहः काम्बोजं प्रति आनाययितव्यः इति । (- अनुवर्तते)





# विवेकी मन्त्रवादी

साहसी त्रिविक्रमः पुनरपि वृक्षसमीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । मौनं श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - "अये राजन् ! अस्मिन् भीकरे श्मशाने शृगालपिशाचादयः एव अटन्ति, न तु मानवाः । अस्मिन् श्मशाने अटन् बहुवारं भवान् कार्ये वैफल्यं प्राप्तवान् । तथापि लेशमात्रमपि निराशा न अनुभूयते भवता इति यत्, तत् आश्चर्यं जनयति । एवं सत्यपि भवता उद्दिष्टं कार्यं किम् इति ज्ञातुं तु न शक्तः अहम् । एकस्य राज्यस्य राजा सन् भवान् कामपि न्यूनताम् अनुभवन् नास्ति खलु ! अन्यदेशीयान् महाराजान् जेतुम् इच्छति वा भवान् ? भवादृशाः बलशालिनः राजानः स्वशक्तिकेन्द्रिताः एव भवेयुः, न तु क्षुद्रदेवतायाः उपासकाः । मम चिन्तनम् अस्ति यत् - भवान् कस्याश्चित् युवत्याम्

## वेतालकथा



अनुरक्तः सन् ताम् एव परिणेतुम् इच्छन् तां परिणेतुं च कष्टम् अनुभवन् अस्ति इति। तदर्थम् एव एतादृशं प्रयासं कुर्वन् स्यात् भवान्। यदि मम चिन्तनं सत्यं स्यात् तर्हि एतद्विषये जागरूकतया भवितव्यम् इति भवन्तं स्मारयितुम् इच्छामि अहम्। एतस्य निदर्शनार्थं कल्याणनगरस्य युवराजस्य कथां श्रावयामि, येन भवतः मार्गायासः परिहृतः स्यात्'' इति।

अनन्तरं वेतालेन कथा आरब्धा -

कनकदत्तनामकः राजा कल्याणनगरं पालयति स्म। तस्य एकमात्रपुत्रः मोहनदत्तः। मोहनदत्तः अतीव सुन्दरः दक्षः च आसीत्। महती अपि समस्या तेन लीलया परिह्रियते स्म। शौर्यं साहसप्रवृत्तिः इत्यादयः तु तस्य सहजगुणाः आसन्। अतः मोहनदत्ताय स्वपुत्रीं दातुम् इच्छन्तः बहवः राजानः स्वपुत्रीणां भावचित्राणि प्रेषितवन्तः कल्याणनगरं प्रति।

मोहनदत्तः सर्वाणि अपि भावचित्राणि दृष्टवान्। किन्तु तासु एकाम् अपि न इष्टवान् मोहनदत्तः।

कल्याणनगरस्य आस्थानचित्रकारः रविवर्मा मोहनदत्तस्य आत्मीयस्नेहितः। उभौ अपि समवयस्कौ। मोहनदत्तः मनोविनोदं प्राप्तुम् इच्छन् तदा तदा रविवर्मणः चित्रमन्दिरं गच्छति स्म।

कदाचित् सायङ्कालसमये मोहनदत्तः रविवर्मणः चित्रमन्दिरं गतवान्। तस्मिन् समये रविवर्मा एकं चित्रं लिखन् आसीत्। तत् कस्याश्चित् सुन्दर्याः युवत्याः चित्रम्। तादृशी सुन्दरी इतःपूर्वं कदापि न दृष्टा आसीत् मोहनदत्तेन। सः आश्चर्येण स्नेहितं पृष्टवान् - ''मित्र! एतत् चित्रं काल्पनिकम्, उत एतादृशी सुन्दरी कुत्रचित् अस्ति ?'' इति।

एतत् श्रुत्वा रविवर्मा मन्दहासपूर्वकम् उक्तवान् - ''मया चित्रिता एषा सुन्दरी अस्मिन् एव नगरे अस्ति। एतस्याः नाम स्वप्नरेखा। कस्यचित् कृषिकस्य पुत्री एषा। इतोऽपि अविवाहिता च'' इति।

तदा मोहनदत्तः महता सन्तोषेण - ''एतादृशीं सुन्दरीं यदि न परिणयेयं तर्हि मम जीवनम् एव व्यर्थम्। अतः अहम् एताम् एव परिणेष्यामि'' इति उक्तवान्।

तस्यां रात्रौ मोहनदत्तेन किञ्चिदपि निद्रा एव न प्राप्ता। स्वप्नरेखाम् एव चिन्तयति स्म तस्य मनः। प्रातःकालसमये किञ्चिदिव निद्रां प्राप्तवान् सः। निद्रायां सः कश्चित् स्वप्नं दृष्टवान्।

एकम् अरण्यम्। तस्मिन् अरण्ये कश्चित् मन्त्रवादी व्याघ्रस्य उपरि उपविश्य गच्छन् अस्ति। तस्य पृष्ठतः स्वप्नरेखा उपविष्टवती अस्ति। मोहनदत्तः अश्वम् आरुह्य तं मन्त्रवादिनम् अनुसृत्य गतवान्। मन्त्रवादी दृढकायः श्मश्रुलः युवकः च। तस्य दक्षिणहस्ते मन्त्रदण्डः अस्ति। कण्ठे रुद्राक्षमाला अस्ति। रक्तवर्णीयमणियुक्तः सुवर्णहारः अपि अस्ति तस्य कण्ठे।

मन्त्रवादी पर्वतप्रदेशस्थायाः गुहायाः समीपं गतवान्। तत्र व्याघ्रात् अवतीर्णः सः गुहां प्रविष्टवान्। व्याघ्रः युवतिः च तम् अनुसृतवन्तौ।

तावति काले मोहनदत्तस्य जागरणम् अभवत्। 'अन्तःपुरे शयनमन्दिरे शयितवान् अस्मि अहम्। एतावत्पर्यन्तं दृष्टः स्वप्नः' इति ज्ञातवान् मोहनदत्तः।

अनन्तरदिने प्रातःकाले एव मोहनदत्तेन वार्ता श्रुता यत् - व्याघ्रदीपनामकः मन्त्रवादी पूर्वस्मिन् दिने रात्रिसमये स्वप्नरेखाम् अपहृत्य गतवान् अस्ति, एतद्विषये जनाः परस्परं सम्भाषणं कुर्वन्तः सन्ति इति। एतां वार्तां श्रुत्वा मोहनदत्तः अतीव दुःखितः।

'व्याघ्रदीपः महाशक्तिमान् मन्त्रवादी। तत्समीपे सम्मोहनशक्तिमान् मणिः अस्ति। मणिसाहाय्येन सः यं कमपि वशीकरोति' इति च जनाः वदन्ति स्म।





एतत् सर्व ज्ञात्वा मोहनदत्तः चिन्तितवान् यत् - रात्रौ दृष्टः न स्वप्नः, अपि तु वास्तविकी स्थितिः इति । अनुक्षणं सः अश्वम् आरुह्य अरण्यं प्रति गतवान् ।

मोहनदत्तः अरण्ये बहुदूरं गतवान् । स्वप्ने दृष्टं स्थलम् अन्विष्यन् सः तत्र सर्वत्र अटितवान् । मध्याह्नसमये सः कञ्चित् वटवृक्षं प्राप्तवान् । वृक्षस्य पार्श्वे एव गुहा आसीत् । मोहनदत्तः अश्वात् अवतीर्य अश्वं वृक्षे बद्ध्वा गुहां प्रविष्टवान् ।

गुहायाः द्वारप्रदेशे व्याघ्रः निद्रामग्नः आसीत् । स्वप्ने व्याघ्रदीपस्य कण्ठे दृष्टः मणिः व्याघ्रस्य कण्ठे विराजमानः आसीत् । व्याघ्रः मोहनदत्तस्य आगमनेन जागरणं प्राप्य उत्थातुम् उद्युक्तः । तावता मोहनदत्तः खड्गेन व्याघ्रं शिरसि ताडितवान् । व्याघ्रः महतीं वेदनाम् अनुभवन् प्राणान् अत्यजत् । मोहनदत्तः व्याघ्रस्य कण्ठस्थं कान्तियुक्तं मणिं स्वीकृत्य स्वकण्ठे धृतवान् । अनन्तरं गुहायाः अन्तः गतवान् । तत्र व्याघ्रदीपः स्वप्नरेखा च उपविष्टौ आस्ताम् । तयोः दृष्टिगोचरत्वं यथा न स्यात् तथा निलीय स्थितवान् मोहनदत्तः ।

'इदानीं किं करोमि ?' इति यावत् चिन्तयन् आसीत् मोहनदत्तः तावता व्याघ्रदीपः स्वप्नरेखाम् उद्दिश्य - ''स्वप्नरेखे ! इतःपूर्वम् अहं मणिप्रभावतः बहूनि साहसकार्याणि साधितवान् अस्मि । तेन मणिप्रभावेण एव भवती अपि अपहृता मया । किन्तु मणिप्रभावेण एव बलात् भवतीं मदीयां कर्तुं न इच्छामि अहम् । अतः एव मणिं व्याघ्रस्य कण्ठे स्थापितवान् अस्मि । सः मणिः यदा मम कण्ठे न भवति, तदा अहं सामान्यः मानवः, न तु विशिष्टशक्तिशाली । यदि भवती माम् इच्छति, तर्हि अहं भवतीं परिणेष्यामि । नो चेत् भवतीं सुरक्षितं भवत्याः गृहं प्रापयामि'' इति उक्तवान् ।

स्वप्नरेखाम् उद्दिश्य मन्त्रवादिनः कथनशैलीं श्रुत्वा मोहनदत्तः आश्चर्यचकितः । मन्त्रवादिनः वचनस्य किम् उत्तरं वदेत् स्वप्नरेखा इति ज्ञातुम् इच्छन् मोहनदत्तः तत्रैव स्थितवान् ।

स्वप्नरेखा सकृत् व्याघ्रदीपं दृष्ट्वा अनन्तरं लज्जया शिरं अवनमय्य उक्तवती - ''भवान् एतादृशं मन्त्रतन्त्रादिकं त्यक्त्वा यदि जनानां

मध्ये गौरवयुतं जीवनं यापयेत्, जनहितकार्याणि च चिन्तयेत्, तर्हि भवतः परिणये मम अनुमतिः भवेत्'' इति।

स्वप्नरेखायाः वचनं श्रुत्वा महता सन्तोषेण व्याघ्रदीपः अनुरागपूर्वकं स्वप्नरेखायाः हस्तं ग्रहीतुम् उद्युक्तः।

तावता मोहनदत्तः अग्रे आगत्य व्याघ्रदीपस्य पुरतः तिष्ठन् - ''स्वप्नरेखे ! तिष्ठतु। एषः मन्त्रवादी दुष्टः, गोमुखव्याघ्रः च। भवती एतं मा परिणयतु। अहम् एतस्य देशस्य युवराजः अस्मि। यदि भवती मां परिणेष्यति, तर्हि कल्याणनगरस्य महाराज्ञी भविष्यति'' इति उक्तवान्।



स्वप्नरेखा युवराजेन मोहनदत्तेन धृतस्य मणेः प्रभावस्य कारणतः मन्त्रमुग्धा इव लज्जाम् अनुभवन्ती आगत्य युवराजस्य पार्श्वे स्थितवती।

एतत् दृष्ट्वा मन्त्रवादी उच्चैः हसितवान्। तदा युवराजः मन्त्रवादिनं तीक्ष्णदृष्ट्या पश्यन् उक्तवान् - ''किमर्थम् उन्मत्तः इव हसति भवान् ? अबलाः महिलाः मणिप्रभावेण वशीकुर्वन् भवान् परमदुष्टः। अहम् एतस्य देशस्य युवराजः अस्मि। न्यायशासनानुसारं भवतः मरणदण्डनं कारयितुं शक्नोमि अहम्। तथापि अनुकम्पया भवन्तं त्यजन् अस्मि अहम्'' इति।

तदा व्याघ्रदीपः - ''प्रभो ! किम् उक्तं भवता ? मणिप्रभावेण अबलाः महिलाः वशीकुर्वन् अहं परमदुष्टः इति खलु भवतः आरोपः ?'' इति वदन् पुनः उच्चैः हसितवान्।

मन्त्रवादिनः वचनेन मोहनदत्तः गम्भीरं चिन्तनम् आरब्धवान्। चिन्तनेन तस्य मुखं विवर्णं जातम्। सः कोपेन कण्ठस्थं मणिं अधः पातितवान्। मणिः शतधा भग्नः जातः।

तावत्पर्यन्तम् अपि मोहनदत्तस्य पार्श्वे स्थिता स्वप्नरेखा विचित्रदृष्ट्या युवराजं पश्यन्ती - ''कः एषः ? किमर्थं मया एतस्य पार्श्वे स्थितम् आसीत् ?'' इति स्वगतं वदन्ती व्याघ्रदीपस्य समीपं गतवती। अनन्तरं मोहनदत्तः गुहातः बहिः आगत्य अश्वम् आरुह्य राजधानीं गतवान्।

वेतालः एवं कथां समाप्य अवदत् -

''अये ! राजन् ! स्वप्नरेखाविषयकस्य गाढानुरागस्य कारणतः एव खलु मोहनदत्तः तां परिणेतुम् इष्टवान् ? अतः एव खलु सः कमपि अनुक्त्वा राजधानीतः निर्गत्य अरण्ये स्वप्नरेखां सर्वत्र अन्विष्टवान् ? अरण्ये कुत्रचित् तेन स्वप्नरेखा दृष्टा । सा यस्यां गुहायाम् आसीत् तस्याः पुरतः व्याघ्रः आसीत् । धीरः सः तं व्याघ्रं लीलया मारितवान् । यदा सः व्याघ्रं मारयित्वा प्रभावयुतं मणिं सम्पादितवान्, तदा स्वप्नरेखायाः परिणये कोऽपि विघ्नः न आसीत् । तथापि सः मणिं भञ्जयित्वा स्वप्नरेखां व्याघ्रदीपस्य वशे एव त्यक्त्वा राजधानीं गतवान् इति यत्, तत् मूर्खतायाः परमावधिः खलु ? अन्यच्च अत्यन्तं शक्तियुतं मणिं किमर्थं भञ्जितवान् सः ? स्वप्नरेखा व्याघ्रदीपे अनुरक्ता इति ज्ञात्वा सः तां त्यक्तवान् स्यात् नाम । किन्तु मणेः भञ्जने किम् औचित्यम् ? एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत्, तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''मन्त्रवादी अन्यविषयेषु दुष्टताम् आचरितवान् स्यात् । किन्तु स्वप्नरेखायाः विषये सः अत्यन्तं सौजन्येन व्यवहृतवान् । मन्त्रतन्त्रादिना तां जेतुम् अशक्ष्यत् सः । किन्तु सः जानाति स्म यत् - स्त्रीहृदयं बलात् न जेतव्यम्, तच्च अत्यन्तं नीचकार्यम् इति । अतः एव सः मणिं व्याघ्रस्य कण्ठे स्थापितवान् आसीत् । किन्तु मोहनदत्तः तं मणिं धृत्वा स्वप्नरेखां वशीकर्तुम् इष्टवान् । अतः एव युवराजं दृष्ट्वा उच्चैः हसितवान् मन्त्रवादी । एतेन स्वकीयं दोषं ज्ञात्वा मोहनदत्तः - 'पुनः मणिः अपरस्य हस्तं न गच्छतु' इति भावनया मणिं नाशितवान् । युवराजस्य व्यवहारे मूर्खता तु सर्वथा नास्ति । न केवलं तावत्, तस्य व्यवहारः धर्मसम्मतः उदारश्च अस्ति'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।





# आशयः पूरितः

समीरः नागपुरस्य राजा । सः प्रजाकण्टकः आसीत् । किन्तु मरणसमये आत्मना कृतस्य व्यवहारस्य निमित्तं पश्चत्तापम् अनुभूतवान् सः ।

राजा समीरः स्वजीवितावधेः अन्तिमक्षणेषु पुत्रं महेन्द्रम् आहूय उक्तवान् - ''वत्स ! मम राज्यपालनसमये प्रजाः बहुधा पीडितवान् अहम् । अतः प्रजाः तु सर्वथा मां न क्षाम्यन्ति । मम इच्छा अस्ति यत् - मम मरणानन्तरं मम प्रशंसां कुर्युः मम प्रजाः इति । एतदर्थं कमपि उपायं चिन्तयतु'' इति ।

महेन्द्रः पितृवत् प्रजाकण्टकः न । सः दयाशीलः । पितुः आत्मशान्त्यर्थं सः नगरे पितुः नाम्नि एकां भोजनशालां, एकं विद्यालयं च निर्मितवान् ।

कानिचन दिनानि अतीतानि । पितुः विषये जनानाम् अभिप्रायं ज्ञातुं महेन्द्रः वेषान्तरं धृत्वा नगरसञ्चारार्थं प्रस्थितवान् । प्रथमं सः पितुः नाम्नि निर्मितां भोजनशालां गतवान् । तत्र भोजनव्यवस्था अतीव उत्तमा आसीत् । सर्वाणि कार्याणि निर्विघ्नं प्रचलन्ति स्म । तथापि सर्वेषां मुखदर्शनेन ज्ञायते स्म यत् कापि न्यूनता अस्ति इति । अतः महेन्द्रः कञ्चित् पृष्टवान् - ''किमर्थं सर्वेषां मुखे सन्तोषः न दृश्यते ?'' इति ।

तदा सः उक्तवान् - ''एतादृशम् उत्तमं धर्मकार्यं प्रजाकण्टकस्य समीरस्य नाम्नि प्रचलति इति कारणतः रुचिकरेण अपि एतेन भोजनेन तृप्तिः न अनुभूयते'' इति ।

एतत् श्रुत्वा महेन्द्रः अतीव खिन्नः । अनन्तरं सः ततः पितुः नाम्नि निर्मितं विद्यालयं गतवान् । तत्र अध्यापकाः सर्वेऽपि आसन् । किन्तु एकोऽपि छात्रः न आसीत् ।

एतत् दृष्ट्वा चकितः महेन्द्रः - ''छात्राः किमर्थं न आगच्छन्ति ?'' इति कञ्चित्

अध्यापकं पृष्टवान् । तदा अध्यापकः उक्तवान् - "महाराजस्य समीरस्य नाम्नि निर्मिते अस्मिन् विद्यालये छात्राः यदि अध्ययनं कुर्वन्ति, तर्हि ते दुर्गुणान् एव अभ्यस्यन्ति, न तु सद्गुणान् इति चिन्तयन्तः पोषकाः स्वपुत्रान् एतं विद्यालयं प्रति प्रेषयितुं सर्वथा न इच्छन्ति" इति ।

महेन्द्रः अध्यापकस्य वचनं श्रुत्वा चिन्ताक्रान्तः । सः तस्मिन् एव दिने भोजनशालां विद्यालयं च स्थगितवान् । अनन्तरदिनेषु राजकार्येषु मग्नः सः पितुः आशयं पूर्णतः विस्मृतवान् ।

कानिचन दिनानि अतीतानि । कदाचित् रात्रौ महेन्द्रः स्वप्ने आत्मशान्तिम् अप्राप्य रुदन्तं पितरं समीरं दृष्टवान् ।

अनन्तरदिने प्रातः महेन्द्रः स्वप्नविषयं मन्त्रिणं निवेदितवान् । तदा मन्त्री उक्तवान् - "महाराज ! भवता दृष्टस्य स्वप्नस्य अर्थः अस्ति - भवतः पितुः आशयः पूरणीयः इति" इति ।

तद्दिनादारभ्य महेन्द्रः प्रजोपकारकाणि बहूनि कार्याणि आरब्धवान् । पूर्वं यावत् करदानम् आसीत्, तस्य अर्धं कृतवान् । सर्वत्र विद्यालयान् निर्मितवान् । धर्मशालाः निर्मितवान् । एतस्मात् कारणात् महेन्द्रः महतीं ख्यातिं प्राप्तवान् । तेषु एव दिनेषु महेन्द्रस्य मन्त्री कांस्यनिर्मितान् समीरस्य विग्रहान् कारयित्वा महानगरस्य चतुष्पथेषु इतरेषु लघुलघुनगरेषु च तेषां प्रतिष्ठापनं कारितवान् । अनन्तरं महेन्द्रः मन्त्री च जनाभिप्रायं ज्ञातुं वेषान्तरं धृत्वा प्रस्थितौ ।

नगरे सर्वत्र सञ्चरन्तौ तौ नगरस्य कञ्चित् चतुष्पथं प्राप्तवन्तौ । तत्र कश्चित् प्रयाणिकः समीरस्य विग्रहं प्रदर्श्य कञ्चित् नागरिकं पृच्छति स्म - 'एषा प्रतिमा कस्य ?' इति । तदा तन्नगरवासी महता सन्तोषेण - "एषा देवतुल्यस्य अस्माकं महाराजस्य पितुः प्रतिमा । एतस्य कृपया एव वयम् एतादृशम् उत्तमं प्रजाहितचिन्तकं राजानं प्राप्तवन्तः" इति उक्तवान् ।

एतेन महेन्द्रः 'बहुकालानन्तरं पितुः आशयः पूरितः' इति अतीव सन्तुष्टः ।



# नारिकेलवृक्षः



नारिकेलवृक्षस्य अपरं नाम 'कल्पवृक्षः' इति। 'विष्णोः अवतारस्पः परशुरामः दुष्टान् दण्डयित्वा गोकर्णनामकशिखरात् स्वकीयं परशुं समुद्रे क्षिप्तवान्। समुद्रस्य यस्मिन् भागे परशुः पतितः, सः भूभागः समुद्रतलात् किञ्चित् उपरि आगतः। तदा परशुरामः स्वर्गात् नारिकेलसस्यम् आनीय तस्मिन् भूप्रदेशे आरोपितवान्। गोकर्णतः कन्याकुमारीपर्यन्तं विस्तृतः सः भूप्रदेशः नारिकेलवर्धनविषये प्रसिद्धिं प्राप्य 'केरलम्' इति नाम प्राप्नोत्' इति पुराणकथा काचित् श्रूयते। केरलम् इत्यस्य 'नारिकेलभूमिः' इत्यपि अर्थः अस्ति।

हिन्दूनां दृष्ट्या नारिकेलफलम् अत्यन्तं पवित्रम्। पूजादिषु शुभकार्यादिषु च नारिकेलस्य एव प्राधान्यम् तेषां जीवने।

समुद्रस्य तीरप्रदेशेषु नारिकेलवृक्षाः सम्यक् वर्धन्ते। अतः एव समुद्रतीरप्रदेशेषु ये जनाः निवसन्ति, तेषां जीवने, तैः आचर्यमाणादिषु उत्सवेषु च महत्त्वपूर्णं पात्रं निर्वहति नारिकेलफलम्। उदाहरणार्थं महाराष्ट्रे वर्षाकालस्य अन्तिमदिनेषु 'नारियलदिनम्' इति उत्सवम् आचरन्ति जनाः। तस्मिन् दिने वरुणदेवाय भक्तिपूर्वकं नारिकेलानि समर्प्यन्ते।

१८ मीटरतः २५ मीटरपर्यन्तम् अपि उन्नतं वर्धते नारिकेलवृक्षः। एतस्मिन् वृक्षे शाखाः न भवन्ति। एतस्य पर्णानां वैशाल्यम् अत्यन्तं न्यूनम्, दैर्घ्यं तु सामान्यतः २.५ मीटर् परिमितं भवति।

नारिकेलपर्णानि पिच्छानि इव दीर्घाणि भवन्ति। उत्पत्तिसमये एतानि पीतच्छायायुक्तानि मुकुलितानि च भवन्ति। यदा प्रवृद्धानि भवन्ति, तदा विशालतया प्रसृतानि भवन्ति तानि। तत्काले हरिद्वर्णः भवति तेषाम्। पर्णानां मध्ये हरितपुष्पाणि उद्भवन्ति। तानि एव फलरूपं प्राप्नुवन्ति। नारिकेलफलानि गुच्छरूपेण भवन्ति।

अपक्वनारिकेलजलस्य पक्वनारिकेलस्य च उपयोगः महान् अस्ति। अपक्वं नारिकेलं वर्धमानं सत् दृढतां प्राप्नोति। शुष्कनारिकेलेन नारिकेलतैलं निर्मीयते। नारिकेलवृक्षतः यत् यत् प्राप्यते, तस्य सर्वस्यापि उपयोगः महान्। अतः एव वाणिज्यप्रपञ्चे एतस्य मूल्यम् अधिकम्। एतस्य उपयोगः महान् अस्ति इत्यतः एव एषः नारिकेलवृक्षः 'कल्पवृक्षः' इत्यपि अभिधीयते।




# पवित्रः बैबल्ग्रन्थः

क्रैस्तानां पवित्रग्रन्थः बैबल् यः अस्ति, तस्मिन् पुरातनमृत्युलेखः, नूतनमृत्युलेखः इति भागद्वयम् अस्ति । पुरातनः मृत्युलेखः मानवजातेः प्राचीनम् इतिहासं विवृणोति । हिब्रूभाषाभाषिणः यहूदजनाः एतस्मिन् इतिहासे श्रद्धां प्रदर्शयन्ति । 'जुडायिसं' नामकं प्राचीनं मतं ते स्वकीयं मन्यन्ते । क्रैस्ताः अपि एतत् एव इतिहासत्वेन अङ्गीकुर्वन्ति । अत्रत्याः कथाः सूक्तीः च पवित्रं मन्यन्ते एते । नूतनः मृत्युलेखः क्रिस्तस्य हितवचनं, तस्य शिष्यैः आपोस्तलवर्येण च कृतानि महत्कार्याणि, सेवाः च विवृणोति ।

सृष्टेः आदिविषये पुरातने मृत्युलेखे एवं लिखितम् अस्ति - ''आदौ भूमेः निर्दिष्टः आकारः न आसीत् । अव्यवस्थितं सत् किञ्चित् गोलाकारमिव आसीत् । ततः कृष्णवर्णीयः भाष्पः उद्गतः । तदा देवः भूमिं स्वर्गं च व्यवस्थितरूपेण सृष्टवान् । सा च सृष्टिः दैवीशक्त्या आवृता अभवत् ।''

महाराजानां विषये महापुरुषाणां विषये च पुरातने मृत्युलेखे बहवः विषयाः उल्लिखिताः सन्ति । ईजिप्ट्देशे कारागृहवासं प्राप्य यहूदजनाः दासत्वेन तिष्ठन्तः महत् कष्टम् अनुभूतवन्तः । तैः इस्रेल्देशं प्रत्यागन्तुं महान् क्लेशः अनुभूतः । अनन्तरं मोसेस् तान् सर्वान् स्वस्थानं नीतवान् । एते सर्वे विषयाः, अन्याः च बहवः अनुभवकथाः, वंशकथाः च सन्ति तत्र ।

नूतने मृत्युलेखे क्रिस्तेन यत् बोधितं तत् अस्ति। सः स्वशिष्यान् बोधितवान् यत् - सर्वेषां विषये प्रीतिः आदरः सहनागुणः च आवश्यकः। केनचित् वयं ताडिताः चेत् अपि तद्विषये अस्माकं क्षमागुणः आवश्यकः। वयं सर्वे अपि अज्ञानिनः, न परिपूर्णाः। अतः अन्यैः कथं व्यवहर्तव्यम् इति विषये निर्णयाधिकारः अस्माकं नास्ति इति। 'पुत्रः गृहम् आगतः' इति शिरोनाम्ना युक्तायाः कथायाः सारः एषः - 'युवकः कश्चित् पित्रा सह कलहं कृत्वा पित्रार्जितभूमौ स्वभागं सम्पाद्य महान्तं व्ययं कुर्वन् विलासजीवनं यापयन् सर्वनाशं प्राप्नोति, अतीव कष्टम् अनुभवति च। दारिद्र्यं सोढुम् अशक्नुवन् सः अनन्यगतिकः पितुः गृहम् एव आगत्य 'कर्मकररूपेण स्थित्वा सेवां करोमि' इति वदति। किन्तु जन्मदाता पिता पुत्रं प्रीत्या सत्करोति। मृतः पुत्रः उज्जीवितः इव सन्तोषम् अनुभवति पिता'। 'ये महतीः लीलाः दर्शयन्ति, ये च कपटप्रवादिनः भवन्ति, तेषां विषये जागरूकैः भाव्यम् अस्माभिः' इति क्रिस्तेन उक्तम् अस्ति। ये दैवे श्रद्धां कुर्वन्ति, विश्वसन्ति च, तेषां जीवनं सुरक्षितम्। ते जीवने सुखम् अनुभवन्ति। अतः तेषां जीवनं शिलाभिः निर्मितं गृहम् इव। ये दैवे न विश्वसन्ति, तेषां जीवनं सिकताभिः निर्मितं गृहम् इव वायुना अपि अवनतिं प्राप्नोति।

प्रपञ्चे प्रसिद्धेषु ग्रन्थेषु बैबल् अपि प्रधानम् अस्ति। न केवलं क्रैस्ताः, इतरे अपि एतं ग्रन्थं पठन्ति इति तु एतस्य वैशिष्ट्यम्।



# भवन्तः जानन्ति वा ?

१. सद्यःकाले प्रसिद्धिं गतः श्रीहरिकोटनामकः प्रदेशः कुत्र अस्ति ? किमर्थं सः प्रसिद्धिं गतः ?
२. ओलम्पिक्क्रीडायाः चिह्ने स्थितानां पञ्चानां रेखाणां वर्णाः के ?
३. अस्माकं देशे ऐदम्प्राथम्येन निर्मितं चलनचित्रमन्दिरं कुत्र अस्ति ? कदा च तत् निर्मितम् ?
४. सा नदी का, यस्याः नद्याः तीरे न्यूयार्कनगरम् अस्ति ?
५. आर्यसमाजस्य स्थापकः कः ?
६. प्रपञ्चस्य विशालः समुद्रः कः ? महासमुद्रश्च कः ?
७. संयुक्तराष्ट्रसङ्घस्य प्रथमा अध्यक्षा का आसीत् ?
८. सीवनयन्त्रं केन संशोधितम् ?
९. जन्तर्-मन्तर इत्युक्ते किम् ? तत् च किमर्थं प्रसिद्धिं गतम् अस्ति ?
१०. सः राजा कः, यश्च सामान्यां काञ्चित् युवतिं परिणेतुं सिंहासनम् एव परित्यक्तवान् ?
११. तत् भवनं किम्, कुत्र च अस्ति, यस्मिन् भवने साहित्य-अकाडेमी, सङ्गीत-नाटक-अकाडेमी, ललितकला-अकाडेमी इत्येतेषां प्रधानकार्यालयाः सन्ति ?
१२. आफ्रिकादेशस्य अतिविशालं नगरं किम् ?
१३. 'विजार्ड् आफ् हाकि' इति प्रसिद्धिः केन प्राप्ता ?
१४. अस्माकं देशे आरब्धा प्रथमा वार्तापत्रिका का ? कस्मिन् वर्षे आरब्धा ? कुतः च प्रकाशिता ?
१५. प्रथमतया दादासाहेब्-फाल्के-प्रशस्तिविजेत्री का ?
१६. 'मार्क ट्विन्' इत्यस्य वास्तविकं नाम किम् ?
१७. 'रिसर्व् ब्याङ्क् आफ् इण्डिया' कदा आरब्धम् ?

## उत्तराणि

१. आन्ध्रप्रदेशस्य समुद्रतीरे अस्ति। रोहिणी एस्.एल्.वि. राकेट् एतस्मात् द्वीपात् एव आकाशं प्रति प्रेषितम् इति कारणतः।
२. नीलः, कृष्णः, रक्तः, पीतः, हरितः च।
३. एलिफिन् स्टोन् पिक्चर् प्यालेस् मुम्बयीनगरे अस्ति। १९०७ तमे वर्षे।
४. हड्सन्।
५. दयानन्दसरस्वतीमहोदयः।
६. चैनासमुद्रः - पेसिफिक्महासमुद्रः।
७. विजयलक्ष्मीपण्डित्। १९५३ तमे वर्षे।
८. आधुनिकयन्त्रस्य संशोधकः एलियास्। १८६७ तमे वर्षे। आधारसूत्रस्य संशोधकः थामस् सैण्ट्। १७९० तमे वर्षे।
९. जयपुरस्य राज्ञा सवाय्मान्सिङ्गमहाशयेन जयपुरे देहल्यां च निर्मितं नक्षत्रगणितशालाद्वयम्। अन्तरिक्षस्थानां नक्षत्राणां ग्रहाणां च परिशीलने एतयोः उपयोगः भवति।
१०. अष्टमः राजा एड्वर्ड्।
११. रवीन्द्रभवनम्। नवदेहल्याम्।
१२. ईजिप्ट्राजधानी कैरो।
१३. भारतीयेन ध्यानचन्द्रमहोदयेन।
१४. हिकीस् गजेट्। १७७९ तमे वर्षे। कलकत्तातः।
१५. देविकाराणी रोरिक्।
१६. शाम्युल् क्लेमेन्स्।
१७. १९३५ तमे वर्षे।



# चोरः बन्धुः

वसन्तपुरे विठलः निवसति । सावित्रीनामिकां परिणीतवान् सः । सावित्र्याः मातृगृहम् अविभक्तकुटुम्बम् । सावित्री अत्यन्तं वात्सल्येन पोषिता आसीत् मातृगृहे ।

विवाहानन्तरं सावित्री पतिगृहम् आगतवती । विठलः पत्न्यै पाकशालायां किं किं कुत्र अस्ति इति विवृण्वन् उक्तवान् - ''अहं मम एकभोजनार्थम् चषकपरिमितं तण्डुलं पचामि स्म अद्यावधि । अद्य आरभ्य चषकद्वयपरिमितं तण्डुलं पचतु'' इति ।

सावित्री पत्युः वचनम् अङ्गीकृतवती ।

सावित्री मातृगृहे रात्रौ शयनात् पूर्वं किमपि खाद्यं खादित्वा एव शयनं करोति स्म प्रतिदिनम् । पतिगृहे तथा नासीत् । एतं विषयं पतिं वक्तुं सावित्र्याः सङ्कोचः ।

सप्ताहः अतीतः । सावित्री महत् कष्टम् अनुभवति स्म । एकस्मिन् दिने रात्रौ सा गाढनिद्रायां मग्नं पतिं दृष्ट्वा निश्शब्दम् उत्थितवती । पाकशालां गत्वा तण्डुलस्य पायसं कृत्वा आकण्ठं पीतवती ।

तद्दिनादारभ्य सावित्री प्रतिदिनम् अपि मध्यरात्रसमये उत्थाय यत् इच्छति तत् खाद्यं निर्माय रहस्येन खादनम् आरब्धवती ।

कदाचित् रात्रौ सावित्री केसरान्नं कृतवती । केसरान्नम् अतीव उष्णम् आसीत् इति कारणतः सा 'पात्राणि प्रक्षाल्य आगत्य खादामि' इति चिन्तयित्वा पात्रक्षालनार्थं गतवती । क्षालनं समाप्य पाकशालाम् आगता सा तत्र किमपि अन्विष्यन्तं कञ्चित् दृष्ट्वा उच्चैः क्रन्दनं कृतवती ।

तदा सः ताम् उक्तवान् - ''क्रन्दनं करोति चेत् भवतीं मारयिष्यामि'' इति ।

एतं कोलाहलं श्रुत्वा पार्श्वप्रकोष्ठे शयितस्य विठलस्य निद्राभङ्गः जातः । सः उच्चैः - ''सावित्रि ! कः तत्र ? कोऽपि



कोलाहलः श्रूयते खलु'' इति उक्तवान्।

'इदानीं यदि मम पतिः उत्थाय आगमिष्यति, तर्हि खाद्यविषयं ज्ञास्यति सः' इति भयात् सावित्री धैर्येण चोरम् उद्दिश्य - ''रे, पश्यतु । इदानीं मम पतिः उत्थाय आगच्छेत्। सः कुपितः भवति चेत् निश्चयेन भवन्तं सम्यक् ताडयिष्यति । अतः मौनम् उपविशतु । केसरान्नं ददामि'' इति वदन्ती पीठं स्थापितवती।

एतस्मात् आश्चर्यचकितः चोरः पीठे उपविष्टवान् । तावता विठलः तत्र आगतवान्। तदा सावित्री पतिम् उक्तवती - ''एषः मम दूरबन्धुः। किमपि कार्यनिमित्तं नगरं प्रति प्रस्थितः अस्ति'' इति।

सावित्र्याः एतस्मात् वचनात् किञ्चिदिव धैर्यं प्राप्य चोरः - ''आवुत्त ! नमस्काराः। भवतोः विवाहसमये आगन्तुं न शक्तः अहम् । अद्य अकस्मात् आगताय मह्यं विशेषमधुरखाद्यं केसरान्नं कृत्वा सानुरोधं परिवेषयन्ती अस्ति मम भगिनी'' इति उक्तवान्।

तावता गृहस्य प्रमुखद्वारस्य ताडनशब्दः श्रुतः। विठलः गत्वा द्वारम् उद्घाटितवान्। द्वौ रक्षकभटौ द्वारे स्थितौ आस्ताम् । तौ विठलम् पृष्टवन्तौ - ''अत्र कोऽपि चोरः आगतवान् वा ?'' इति।

तदा विठलः - ''अत्र कोऽपि चोरः न आगतः । चिरात् आगतः मम श्यालः भगिन्या सह जल्पनं कुर्वन् अस्ति'' इति उक्तवान्।

एतत् श्रुत्वा रक्षकभटौ ततः निर्गतवन्तौ । तदा सावित्री पतिम् उक्तवती - ''मम अनुजः एषः वदन् अस्ति - भवतोः दर्शनं तु जातम्। अतः इदानीम् एव नगरं गच्छामि अहम् इति'' इति।

तदा विठलः उक्तवान् - ''गृहं प्रति चिरात् आगतं भवत्याः बन्धुवर्यं मध्यरात्रे प्रेषयति वा भवती ? एषः अस्माकं धर्मः न। पार्श्वप्रकोष्ठे तस्य निमित्तं शय्यां प्रसारयतु। सः अत्रैव शयनं कृत्वा प्रातः नगरं गन्तुम् अर्हति'' इति।

पत्युः वचनं श्रुत्वा अनन्यगतिका सावित्री चोराय शय्यां सज्जीकृतवती । अनन्तरं सा चोरम् उद्दिश्य - ''चोराणां दर्शनमात्रेण तान् ताडयितुं दण्डं गृह्णाति मम

पतिः। अहं मम पतितः भवन्तं रक्षितवती। मम पतिः भवन्तम् आरक्षकभटानां सकाशात् रक्षितवान्। अतः अस्मद्गृहे चौर्यं कर्तुम् इच्छन् अनीतिं मा आचरतु। आवयोः शयनानन्तरं निश्शब्दं द्वारम् उद्घाट्य गच्छतु भवान्" इति उक्त्वा शयनार्थं स्वप्रकोष्ठं गतवती।

रात्रौ बहुकालं यावत् सावित्र्या निद्रा एव न प्राप्ता। रात्रेः अन्तिमयामे किञ्चिदिव निद्रां प्राप्तवती सा। पुनः तस्याः जागरणसमये प्रातःकालः जातः आसीत्। सा झटिति उत्थाय चोरस्य शयनप्रकोष्ठं गत्वा दृष्टवती। तत्र चोरः नासीत्। चौर्यं किमपि कृतवान् स्यात् वा सः चोरः इति सन्देहेन सावित्री अन्तः गत्वा आभरणपेटिकाम् उद्घाट्य दृष्टवती। आभरणपेटिका रिक्ता आसीत्। कौशेयशाटिकाः अपि न आसन्। एतत् दृष्ट्वा उच्चैः रोदनम् आरब्धवती सावित्री।

रोदनं श्रुत्वा विठलः उत्थाय आगतवान्। तदा सावित्री पतिम् उक्तवती – "सः चोरः सर्वाणि आभरणानि कौशेयशाटिकाः च अपहृत्य गतवान्" इति।

एतत् श्रुत्वा – "चोरः वा ? कुत्र गतः सः ?" इति पृष्टवान् विठलः।

तदा सावित्री पतिम् उक्तवती – "रात्रौ यः आगतः आसीत्, सः मम बन्धुः न, अपि तु चोरः" इति।

पत्न्याः वचनं श्रुत्वा विठलः कोपेन पृष्टवान् – "तर्हि किमर्थं भवती माम् असत्यम् उक्तवती ?" इति।



तदा सावित्री प्रतिदिनं मध्यरात्रसमये आत्मना रहस्येन खाद्यं कृत्वा खाद्यते स्म यत्, तत् सर्वं पतिम् उक्त्वा – "भवान् यथा न जानाति तथा मया यः व्यवहारः कृतः, तदर्थं योग्यं प्रायश्चित्तम् अभवत् मम" इति उक्तवती।

एतत् श्रुत्वा विठलः मन्दहासपूर्वकं – "भवत्याः आभरणानि, शाटिकाः च चोरेण न अपहृताः। तेन चोरेण लिखितम् एतत् पत्रं पठतु भवती" इति वदन् सावित्र्यै एकं पत्रं दत्तवान्।

पत्रे एवं लिखितम् आसीत् –

'अहं कश्चन निरुद्योगी। अल्पः उद्योगः प्राप्तः चेत् अपि तत् अपमानकरम् इति भावयन् अहं तदपि त्यक्तवान्। ऐदम्प्राथम्येन

अद्य चौर्यं कर्तुम् उद्युक्तः अहम् । किन्तु आरक्षकाणां दर्शनमात्रेण एव भीतः अहम् । आरक्षकेभ्यः आत्मानं रक्षितुम् इच्छन् भवतः गृहं प्रविष्टवान् । भगिन्या क्षन्तव्यः अहम् । आत्मना रहस्येन खाद्यं खाद्यते इति यत् तत् गोपयितुम् इच्छन्ती भगिनी 'दूरबन्धुः' इति मां परिचायितवती । अन्यत्र भवतः द्वारा आरक्षकाणां समीपे असत्यं वाचितवती सा । एतादृशस्य लघुविषयस्य निमित्तम् एव भगिनी महत् कष्टम् अनुभूतवती । यदि वास्तविकः चोरः आरक्षकेभ्यः आत्मानं गोपयितुम् इच्छति, तर्हि कियत् कष्टम् अनुभोक्तव्यं भवेत् चोरेण ! अतः एतस्याः घटनातः भीतः अहं ज्ञातवान् यत् – चोरस्य जीवने मनःशान्तिः न भवति । स्वेन किञ्चित् एव आर्जितं चेत् अपि तेन गौरवयुतं जीवनं यापयितुं शक्येत इति । मयि परिवर्तनम् आनीतवत्यां भगिन्याम् अपि परिवर्तनं भवतु इति उद्देशेन एतत् पत्रं लिखितवान् अस्मि' इति ।

सावित्री पत्रं पठित्वा – ''एतावत्पर्यन्तम् अविवेकेन मया यत् व्यवहृतं, तदर्थं मां क्षाम्यति वा भवान् ?'' इति पृष्टवती ।

तदा विठलः उक्तवान् – ''अत्र क्षमायाः प्रसक्तिः एव नास्ति । भवत्या मातृगृहे यत् अभ्यस्तम् आसीत् तदेव अत्रापि अनुवर्तितवती भवती । एतद्विषये मम अन्यथा चिन्तनं सर्वथा नास्ति । भवत्याः आभरणानि शाटिकाः च अन्तः प्रकोष्ठे मया स्थापितानि सन्ति । प्रातःकाले भवत्याः अपेक्षया पूर्वम् एव अहम् उत्थितवान् इति कारणतः चोरेण लिखितं पत्रम् अहं प्राप्तवान् ! अहं भवत्याः स्वभावं पूर्वम् एव ज्ञातवान् । किन्तु न प्रकटितवान् आसम् । इतःपरं गोपनस्य आवश्यकता नास्ति खलु ! भवती रुचिकरं यत् करोति तत् अहम् अपि खादिष्यामि भवत्या सह । तेन ममापि सन्तोषः एव'' इति ।

प्रवृत्तायाः घटनायाः विषये पतिः अन्यथा न भावितवान्, अपि तु प्रेमातिशयं प्रकटितवान् इति कारणतः सावित्री अतीव सन्तुष्टा अभवत् ।





# उत्तमं कुटुम्बम्

शान्तिपुरनामके ग्रामे सोमशेखर-नामकः कृषिकः आसीत् । तदीया पित्रार्जिता भूमिः आसीत् । तेन सः जीवननिर्वहणं करोति स्म । सोमशेखरस्य पुत्रः भूषणः । सः कृषिकार्येषु पितुः साहाय्यं करोति स्म ।

कदाचित् सोमशेखरः कार्यनिमित्तं नगरं गतवान् । नगरगमनमार्गे एका नदी अस्ति । नगरं गन्तव्यं चेत् नौकाद्वारा नदी क्रमणीया आसीत् । महता प्रवाहेण नदी उद्गच्छति चेत् नगरं प्रति गमनम् अशक्यम् आसीत् ।

सोमशेखरः नगरे स्वकार्याणि समाप्य ग्रामं प्रति प्रस्थितः । किन्तु तस्मिन् समये नदी प्रवाहेण उद्गच्छन्ती आसीत् । तत् दृष्ट्वा सोमशेखरः चिन्तितवान् - 'सप्ताहं यावत् एषः प्रवाहः न्यूनः न भवति' इति । अतः सः दूरमार्गम् आश्रित्य ग्रामं गन्तुम् इच्छन् वृषभशकटचालकस्य शङ्करस्य गृहं गतवान् ।

सोमशेखरस्य विषयं ज्ञात्वा शङ्करः गमनार्थं वृषभशकटं सज्जीकृतवान् । तावता पञ्चाशद्वर्षीयः धनिकः इव दृश्यमानः कश्चित् तत्र आगत्य - ''किं भोः ! शङ्कर ! भवतः आनयनार्थं मम कर्मकरं प्रेषितवान् आसम् अहम् । भवान् इतोऽपि अत्रैव अस्ति । मम पुत्र्याः विवाहसम्बन्धनिमित्तं मया अद्य शान्तिपुरं प्रति गन्तव्यम् । अद्य उत्तममुहूर्तः अस्ति इति पुरोहितः अपि उक्तवान् अस्ति । अतः गच्छाम वा इदानीम् ?'' इति शङ्करं पृष्टवान् ।

युगपत् एव द्वौ प्रयाणिकौ लब्धौ इति अतीव सन्तुष्टः शङ्करः । सः तं धनिकम् - 'आगच्छतु श्रीपतिमहोदय' इति स्वागतीकृतवान् । अनन्तरं च सोमशेखरं प्रदर्शयन् उक्तवान् - ''एषः अपि शान्तिपुरं गन्तुम् इच्छति । भवान् शान्तिपुरे यद्गृहं गन्तुम् इच्छति, तदर्थं मार्गम् एतस्य द्वारा

सुलभतया ज्ञातुं शक्नोति भवान्'' इति।

अनन्तरं ते सर्वे शकटद्वारा शान्तिपुरं प्रति प्रस्थिताः । प्रयाणसमये सम्भाषणावसरे सोमशेखरः श्रीपतिविषये ज्ञातवान् यत् - श्रीपतिः महावणिक्, तस्य एकमात्रपुत्री अस्ति, शान्तिपुरनिवासिनः कृषिकस्य महाधनिकस्य राजशेखरस्य पुत्राय स्वपुत्री दातव्या इति उद्देशेन श्रीपतिः शान्तिपुरं प्रति प्रस्थितवान् अस्ति इति।

अनन्तरं श्रीपतिः राजशेखरविषये विवरणं ज्ञातुम् इच्छन् सोमशेखरं पृष्टवान्। तदा सोमशेखरः श्रीपतिम् उक्तवान् - ''विवाहसम्बन्धविषये सदापि अन्येषाम् अभिप्रायस्य श्रवणस्य अपेक्षया अपि प्रत्यक्षं सम्भाषणम् एव वरम्। राजशेखरस्य विषये किमपि वक्तुं न इच्छामि अहम्। यतः मम पुत्रोऽपि विवाहवयस्कः अस्ति । केनापि कारणेन यदि एषः विवाहप्रस्तावः स्थगितः स्यात्, तर्हि तत्र कारणीभूतः अहम् एव इति राजशेखरः चिन्तयेत् अपि'' इति।

सोमशेखरस्य निस्स्वार्थं स्पष्टं च सम्भाषणं श्रुत्वा अतीव सन्तुष्टः श्रीपतिः। तावति काले ते शान्तिपुरं प्राप्तवन्तः । तस्मिन् समये कश्चित् वृद्धवृषभं कश्चित् बलात् पर्वतप्रदेशं प्रति नयन् आसीत्। तं दृष्ट्वा 'सः राजशेखरस्य कर्मकरः' इति ज्ञात्वा सोमशेखरः शकटं स्थगयन् पृष्टवान् - ''एषः राजशेखरस्य वृषभः खलु ! किमर्थम् एतं बलात् आकृष्य नयन् अस्ति भवान् ?'' इति।

तदा कर्मकरः उक्तवान् - ''एषः वृद्धः जातः खलु ! अतः एतेन न किमपि प्रयोजनम्। 'एतस्मै दीयमानेन आहारेण वृथा



व्ययः । अतः एतं पर्वतप्रदेशं नीत्वा तत्र त्यजतु । तत्र एषः वृषभः कानिचन दिनानि जीवति । अनन्तरं च तत्रैव मृतः भविष्यति' इति मम स्वामी उक्तवान् अस्ति'' इति।

कर्मकरस्य वचनं श्रुत्वा अतीव खिन्नः सोमशेखरः उक्तवान् - ''वृषभेण यौवनकाले या सेवा कृता, सा कदापि न विस्मरणीया। यदि भवान् एतं पर्वते त्यजति तर्हि प्रातःकालाभ्यन्तरे एव क्रूरमृगैः भक्षितः भविष्यति एषः वृषभः । अतः मम गोशालायाम् एतं पालयन् एतस्मै आहारम् अपि दास्यामि अहम् । एतद्विषये भवतः स्वामी किमपि पृच्छति चेत् तस्य उत्तरम् अहं वदिष्यामि । इदानीं भवान् एतं वृषभं मम गोशालां नयतु । तत्र एतं बद्ध्वा गच्छतु च'' इति।

'एतद्विषये स्वामी मां तर्जयेत् वा' इति भयम् अनुभवन् एव कर्मकरः वृषभं सोमशेखरस्य गोशालां नीत्वा तत्र बद्धवान्।

तावति काले शङ्करस्य वृषभशकटं सोमशेखरगृहसमीपम् आगतम् । सोमशेखरः शकटात् अवतीर्णः । तावता तद्गृहस्य वितर्दिकायाम् उपविष्टः वृद्धः कश्चित् धावन् अग्रे आगत्य - ''सोमशेखर ! मम उभौ अपि पुत्रौ कीदृशौ इति भवान् जानाति एव किल ! ह्यः तौ मां गृहात् निष्कासितवन्तौ। भवतः गृहे मम वासार्थं भवान् अवश्यम् अनुमतिं ददाति इति विश्वासेन अत्र आगतवान् अहम्'' इति उक्तवान्।

तदा सोमशेखरः तस्य वृद्धस्य हस्तौ गृहीत्वा - ''आर्य ! किमर्थं तादृशवचनानि वदति भवान् ? मम पितृसमानः भवान् मम



गृहे एव तिष्ठतु। स्वर्गस्थः पिता एव आगतः अस्ति इति भावयामि'' इत्युक्तवान् सन्तोषेण।

अनन्तरं सोमशेखरः श्रीपतिम् उक्तवान् - ''कृपया भवान् मम गृहम् आगत्य नारिकेलजलपानेन आयासं परिहृत्य अनन्तरं राजशेखरस्य गृहं गच्छतु'' इति।

सोमशेखरस्य वचनम् अङ्गीकुर्वन् श्रीपतिः शकटात् अवतीर्णः। तस्मिन् समये तत्र आगतः सोमशेखरस्य पुत्रः पितरम् उक्तवान् - ''नदी प्रवाहेण उद्गच्छन्ती अस्ति इति ज्ञात्वा भवतः आगमनं कथं स्यात् इति अतीव चिन्ताक्रान्तः आसम् अहम्। परन्तु भवान् विनाविघ्नं गृहं प्राप्तवान् इति महान् सन्तोषः। एषः आर्यः किं वदति ? भवतः आगमनपर्यन्तम् अपि गृहस्य अन्तः न आगच्छामि इति वदन् वितर्दिकायाम् एव उपविष्टवान् आसीत्। जन्मदातारं पितरम् अपि गृहात् बहिष्कृतवन्तौ एतस्य पुत्रौ न मनुष्यौ, अपि तु राक्षसौ'' इति।

एतत् सर्वं परिशीलयन् श्रीपतिः सोमशेखरेण दत्तं नारिकेलजलं पीत्वा वरण्डे किञ्चित्कालम् विश्रम्य शकटचालकं शङ्करम् उद्दिश्य - ''शङ्कर! राजशेखरस्य गृहं प्रासादः इव स्यात्। किन्तु तत्रत्यानां जनानां मनः तु विशालं नास्ति। अतः अहं तत्र गन्तुं न इच्छामि। पुनः मां नगरम् एव नयतु'' इति वदन् ततः प्रस्थितः।

एतत् श्रुत्वा शङ्करः आश्चर्येण पृष्टवान् - ''श्रीपतिमहोदय! किमिदम् ? वरं द्रष्टुं न इच्छति वा भवान् ?'' इति।

तदा श्रीपतिः ''मम पुत्र्याः निमित्तं वरः दृष्टः मया'' इति वदन् शकटम् आरुह्य उपविष्टवान्। अनन्तरं नगरगमनमार्गे शङ्करम् उक्तवान् सः - ''येषां हृदये किञ्चित् अपि दया नास्ति, तेषां गृहे मम पुत्री कथं वा सुखेन जीवनं यापयेत् ? राजशेखरस्य तद्गृहसदस्यानां च दृष्ट्वा वार्धक्यप्राप्तिः एव शापः। धनकनकादिभिः मत्समानः न स्यात् सोमशेखरः, तथापि तद्गृहसदस्याः सर्वे अपि दयापराः। मम पुत्री तेषां गृहे सुखेन जीवेत्'' इति।





# महाभारतम्

पिता परीक्षित् कथं मरणं प्राप्तवान् इति जनमेजयः ज्ञातवान् । तस्य बाल्ये एव तस्य पट्टाभिषेकं कृतवन्तः मन्त्रिणः । सः यदा प्राप्तयौवनः जातः तदा काशीराजस्य पुत्र्या वपुष्टमया सह तस्य विवाहः अभवत् ।

अनन्तरं मन्त्रिणः सर्वे जनमेजयम् उपदिष्टवन्तः यत् - भवतः पिता परीक्षिद्राजः सर्पदंशनेन मृतः इति कारणतः भवता सर्पयागकरणं वरम् । उदङ्कमहामुनेः अभिप्रायः अपि एषः एव इति ।

मन्त्रिणाम् एतत् हितवचनम् अङ्गीकुर्वन् जनमेजयः सर्पयागं कर्तुं निश्चितवान् । तस्मिन् च सर्पयागे तक्षकादीनां सर्पाणाम् आहुतिं कर्तुं निश्चितवान् च ।

यागार्थं यानि वस्तूनि आवश्यकानि तानि सङ्गृहीतानि । यज्ञशालाः निर्मिताः । यागार्थं सर्वाः सिद्धताः जाताः । तस्मिन् समये भविष्यज्ज्ञानी सूतः लोहिताक्षः आगत्य जनमेजयम् उक्तवान् - 'एतस्य यागस्य समाप्तितः पूर्वम् एव कश्चन ब्राह्मणः आगत्य यागस्य विघ्नम् आचरति' इति ।

जनमेजयः तस्य वचनं गम्भीरतया न परिगणितवान् । अपि तु यागः यावत्पर्यन्तं प्रचलति तावत्पर्यन्तं यज्ञशालां प्रति लोहिताक्षस्य प्रवेशः न कारणीयः इति अन्यान् आज्ञप्तवान् । अनन्तरं च देव्या वपुष्टमया सह यागदीक्षां स्वीकृत्य यज्ञशालां प्रविष्टवान् ।

सर्पयागस्य होता चण्डभार्गवः । पिङ्गलः अध्वर्युः । कौत्सः उद्गाता । यागः यदा आरब्धः तदा सर्पाः स्वयम् आगत्य अग्निकुण्डे पतितवन्तः । म्रियमाणानां सर्पाणां संख्या



लक्षाधिकं जाता । एतस्मात् भीतः तक्षकः इन्द्रं शरणं गतः ।

भीतं तक्षकं सान्त्वयन् इन्द्रः उक्तवान् - "केषाञ्चन उत्तमजातीयानां सर्पाणाम् एतादृशात् यागात् अपि भीतिः नास्ति इति ब्रह्मा पूर्वमेव मां सूचितवान् अस्ति । अतः भवतः भीतिः मास्तु । भवान् निश्चिन्ततया मम समीपे तिष्ठतु" इति ।

सर्पाणां विनाशस्थितिं दृष्ट्वा वासुकिः दिग्भ्रान्तः । सः जरत्कारुसमीपं गतवान् । जरत्कारुः वासुकेः अनुजा । वासुकिः अनुजां समग्रं विषयं निवेद्य उक्तवान् - "भवत्याः पुत्रम् आस्तिकं यागस्थानं प्रेषयतु । तद्द्वारा यागं स्थगयतु" इति ।

जरत्कारुः पुत्रम् एतं विषयं बोधितवती । आस्तिकः मातुः आज्ञानुसारं सर्पयागस्थानं गत्वा स्वस्तिवचनानि उक्त्वा महाराजम् ऋत्विजः अग्निं च निरन्तरं स्तुतवान् ।

तदा जनमेजयः वात्सल्येन - "भवान् लघुबालः चेत् अपि भवति महत् ज्ञानम् अस्ति । भवान् यत् इच्छति तत् पृच्छतु । दास्यामि अहम्" इति उक्तवान् ।

अनुक्षणम् आस्तिकः जनमेजयम् उक्तवान् - "एतं सर्पयागं स्थगयतु" इति ।

तदा जनमेजयः - "सर्पयागस्य स्थगनं विना अन्यत् किमपि पृच्छतु, दास्यामि" इति बहुधा उक्तवान् आस्तिकम् । किन्तु आस्तिकः सर्पयागस्थगनम् एव करोतु इति पुनः पुनः आग्रहं कृतवान् । तत्र सम्मिलिताः अन्ये अपि स्वाभिप्रायं प्रकटितवन्तः यत् - दत्तं वचनं रक्षितुं सर्पयागस्थगनम् एव वरम् इति । तस्मात् जनमेजयः सर्पयागं स्थगितवान् ।

अनन्तरं जनमेजयः सर्वान् सत्कृतवान् । सर्वेभ्यः दक्षिणादिकं दत्तवान् । तदा वेदव्यासः शिष्यैः सह तत्र आगतवान् । वेदव्यासस्य शिष्यस्य वैशम्पायनस्य मुखात् स्वपूर्वजानां पाण्डवानां वृत्तान्तं श्रुतवान् जनमेजयः ।

भरतवंशस्य मूलपुरुषः वैवस्वतमनुः । सः अदितेः पौत्रः । वैवस्वतमनोः पुत्री इला पुरूरवसं प्रसूतवती । ऊर्वशी पुरूरवसः पत्नी । तयोः षट् पुत्राः जाताः । तेषु षट्सु आयुः अपि अन्यतमः । आयुः नहुषादीन्

चतुरः पुत्रान् प्राप्तवान् । शतं यागान् कृत्वा कञ्चित् कालं यावत् इन्द्रपदवीम् अपि अनुभूतवान् नहुषः षट् पुत्रान् प्राप्तवान् । तेषु यतिः ज्येष्ठः । यतिः तपः कर्तुं यदा गतः तदा नहुषस्य द्वितीयः पुत्रः ययातिः राज्यपालनम् आरब्धवान् ।



ययातेः राज्यपालनसमये शुक्राचार्यः दानवानां पुरोहितः आसीत् । शुक्राचार्यः देवदानवानां युद्धे मृतान् दानवान् सञ्जीविनीमन्त्रेण पुनरुज्जीवयति स्म । देवतानां गुरुः बृहस्पतिः सञ्जीविनीमन्त्रं न जानाति । अतः देवाः बृहस्पतेः पुत्रं कचम् उद्दिश्य - ''शुक्राचार्यसमीपं गत्वा भवान् सञ्जीविनीमन्त्रम् अभ्यस्य आगच्छतु'' इत्युक्त्वा प्रेषितवन्तः ।

कचः शुक्राचार्यसमीपं गत्वा तस्य सेवां कुर्वन् तस्य पुत्रीं देवयानीं तोषयन् आसीत् । तदा दानवैः ज्ञातं यत् - कचः बृहस्पतेः पुत्रः इति । कचः कदाचित् अरण्ये गुरोः शुक्राचार्यस्य धेनूः चारयन् आसीत् । तस्मिन् समये दानवाः तत्र गत्वा कचं मारितवन्तः । एतं विषयं ज्ञात्वा शुक्राचार्यः सञ्जीविनीमन्त्रेण कचं पुनरुज्जीवितवान् । पुनः कदाचित् कचः देवयान्याः निमित्तं पुष्पाणि आनेतुं गतवान् आसीत् । तदा पुनरपि दानवाः कचं मारयित्वा शवं समुद्रे क्षिप्तवन्तः । कचस्य विरहात् दुःखिता देवयानी रोदनम् आरब्धवती । तदा शुक्राचार्यः पुनः कचम् उज्जीवितवान् ।

दानवाः तृतीयवारं कचं मारयित्वा, शवदहनं च कृत्वा तस्य भस्म सुरायां मिश्रीकृत्य तां सुरां शुक्राचार्याय पातुं दत्तवन्तः । शुक्रः तां सुरां पीतवान् । मृतः कचः उदरे अस्ति इति ज्ञात्वा शुक्राचार्यः तम् उज्जीवयितुम् इच्छन् अनन्यगतिकतया कचं सञ्जीविनीमन्त्रं बोधयित्वा तम् उक्तवान् - ''मम उदरं विदार्य बहिः आगच्छतु भवान् । अनन्तरं च मन्त्रेण माम् उज्जीवयतु'' इति । कचः तथैव कृतवान् ।

कचः सञ्जीविनीमन्त्रं ज्ञातवान् । यदुद्दिश्य आगतम् आसीत् कचेन, तत् कार्यं सिद्धम् । अतः सः कदाचित् गुरुं शुक्राचार्यम् उक्तवान् - 'अहं गच्छामि' इति ।

एतत् श्रुत्वा देवयानी - ''भवद्विषयकेण अनुरागेण पितुः द्वारा बहुवारम् अहं भवन्तम्



उज्जीवितवती । अतः भवान् मां परिणयतु'' इति उक्तवती ।

तदा कचः उक्तवान् - ''शान्तं, पापम् । गुरुपुत्री भवती मम सोदरीसमाना'' इति ।

'तर्हि भवता ज्ञातः सञ्जीविनीमन्त्रः निष्फलः भवतु' इति शप्तवती देवयानी ।

तदा कचः - 'ब्राह्मणः भवतीं मा परिणयतु' इति प्रतिशापं दत्त्वा ततः गतवान् ।

दानवानां राजा वृषपर्वा । तस्य शर्मिष्ठानामिका पुत्री अस्ति । शर्मिष्ठा कदाचित् देवयान्या अन्याभिः सखीभिः च सह वनविहारार्थं गतवती । मध्येमार्गं कश्चन तटाकः दृष्टः ताभिः । ताः सर्वाः तटाके जलक्रीडां कर्तुम् इच्छन्त्यः स्ववस्त्राणि निष्कास्य तटाकतीरे स्थापयित्वा तटाकम् अवतीर्णाः । तस्मिन् समये महान् वायुः आगत्य तासां वस्त्राणि इतस्ततः अकरोत् ।

जलक्रीडां समाप्य ताः युवतयः तीरम् आगत्य वस्त्राणि धृतवत्यः । सर्वासां वस्त्राणि इतस्ततः जातानि आसन् इति कारणतः शर्मिष्ठा देवयान्याः शाटिकां धृतवती आसीत् । जलक्रीडां समाप्य तीरम् आगता देवयानी स्वशाटिकां धृतवतीं शर्मिष्ठां दृष्ट्वा महता अहङ्कारेण - ''रे राक्षसि ! अहं तु ब्राह्मणस्त्री । अतः अहं भवत्याः शाटिकां न धरामि । मम शाटिकां भवती किमर्थं धृतवती ?'' इति पृष्टवती ।

तदा शर्मिष्ठा अपि कोपेन - ''रे गर्विते ! भवती तु भिक्षुककुले जाता अस्ति । भवत्याः पिता मम पितुः कृपादानेन एव जीवति । एवं सति मम शाटिकायाः धरणे भवत्याः आक्षेपः किमर्थम् ?'' इति पृष्टवती । तावता अपि शर्मिष्ठायाः कोपः न शान्तः । सा कोपेन देवयानीं पार्श्वस्थे कूपे पातयित्वा सखीभिः सह ततः गतवती ।

किञ्चित्कालाभ्यन्तरे एव मृगयार्थं तेन मार्गेण आगतः ययातिः पिपासानिवारणं कर्तुम् इच्छन् कूपसमीपम् आगत्य दृष्टवान् । कूपे पतिता देवयानी तेन दृष्टा । सः तां पृष्टवान् - ''भवती का ? कथं कूपे पतितवती भवती ?'' इति ।

तदा देवयानी - ''अहं देवयानी अस्मि । दानवगुरोः शुक्राचार्यस्य पुत्री । केनचित् कारणेन कूपे पतितवती अहम् । कृपया माम्



उद्धरतु'' इति वदन्ती हस्तौ उपरि प्रसारितवती।

ययातिः स्वदक्षिणहस्तेन देवयान्याः दक्षिणहस्तं गृहीत्वा ताम् उपरि आनीतवान्। अनन्तरं ततः गतवान्।

तावति काले तत्र देवयानीम् अन्विष्यन्ती घूर्णिकानामिका दासी आगतवती। देवयानी दासीम् उक्तवती - ''शर्मिष्ठा मम घोरम् अपचारं कृतवती। अतः अहम् इतःपरं वृषपर्वणः नगरे पदम् अपि न स्थापयामि इति इदानीम् एव गत्वा मम पितरं वदतु'' इति।

घूर्णिका शुक्राचार्यम् एतं विषयं निवेदितवती। शुक्राचार्यः विषयं ज्ञात्वा देवयान्याः समीपम् आगत्य तां पृष्टवान् - ''वत्से! शर्मिष्ठाविषये भवती किम् अपकृतवती?'' इति।

तदा देवयानी प्रवृत्तं सर्वं विषयं विस्तरेण पितरं निवेदितवती। एतत् श्रुत्वा शुक्राचार्यः उक्तवान् - ''वत्से! भवतीं विना मदीयः इति कोऽपि नास्ति मम। यदि भवती वृषपर्वणः नगरं न आगमिष्यति, तर्हि अहम् अपि न गमिष्यामि'' इति।

तावति काले प्रवृत्तां घटनां ज्ञात्वा वृषपर्वा स्वयं तत्र आगतवान्। देवयानीं शुक्राचार्यं च उद्दिश्य उक्तवान् - ''किमर्थं भवन्तौ अत्रैव स्तः? आगच्छताम्। नगरं गच्छाम'' इति।

एतत् श्रुत्वा शुक्राचार्यः कोपेन उक्तवान् - ''भवतां व्यवहारः समीचीनः नास्ति। भवदीयाः मम शिष्यं कचं त्रिवारं मारितवन्तः। भवतः पुत्री शर्मिष्ठा मम पुत्रीं कूपे पातितवती। अतः भवतां सहवासः एव मास्तु मम'' इति।

तदा वृषपर्वा क्षमां प्रार्थयन् उक्तवान् - ''कृपया क्षाम्यतु। देवयान्या अपि नगरं प्रति आगमनम् अङ्गीकारयतु। सा यथा इच्छति, तथा व्यवहरामः वयम्'' इति।

एतत् श्रुत्वा देवयानी उक्तवती - ''शर्मिष्ठा, तस्याः दासीपरिवारः च मम दास्यत्वेन भवति चेत् एव अहं नगरम् आगमिष्यामि'' इति।

राजा वृषपर्वा देवयान्याः वचनम् अङ्गीकृतवान्। शर्मिष्ठा देवयान्याः दासीत्वेन स्थितवती। तस्याः तीक्ष्णानि वचनानि अपि



सोढवती। यतः शुक्राचार्यतः दानवलोकस्य एव महान् उपकारः क्रियमाणः आसीत्।

कदाचित् देवयानी शर्मिष्ठया अन्याभिः दासीभिः च सह पूर्वं विहारार्थं गतं स्थलं गतवती। तस्मिन् दिने अपि ययातिः मृगयां कुर्वन् तत्र आगतवान्। शर्मिष्ठा तं पृष्टवती – "भवान् कः ?" इति।

ययातिः स्वकुलगोत्रादिकम् उक्तवान्।

एतत् श्रुत्वा देवयानी ययातिम् उक्तवती – "भवान् पूर्वं मां कूपतः उद्धृतवान् खलु ! तद्दिने एव आवयोः विवाहः जातः। अतः तस्मात् दिनात् आरभ्य भवन्तं मम पतिः इत्येव भावितवती अस्मि" इति।

ब्राह्मणकन्यायाः परिणयः उचितः न भवेत् इति क्षणकालं चिन्तितवान् ययातिः। किन्तु शुक्राचार्यः तयोः विवाहम् अङ्गीकृतवान्। अनन्तरं ययाति-देवयान्योः विवाहः महता वैभवेन सम्पन्नः। शुक्राचार्यः दानवप्रमुखान् ययातिं च सत्कृतवान्।

अनन्तरं देवयानी दासीपरिवारेण शर्मिष्ठया च सह श्वश्रूगृहं प्रति प्रस्थितवती। दासीपरिवारस्य शर्मिष्ठायाः च वसत्यर्थं ययातिः अशोकवनसमीपे एकं बृहत् भवनं व्यवस्थापितवान्।

देवयानी ययातितः यदुनामकं तुर्वसुनामकं च पुत्रौ प्रसवती।

कानिचन दिनानि अतीतानि। 'देवयानी विवाहिता। पुत्रवती अपि जाता। किन्तु मम विवाहः इतोऽपि न सम्पन्नः' इति आत्मनः विषयं चिन्तयन्ती शर्मिष्ठा दुःखिता जाता।

अनन्तरं शर्मिष्ठा – 'देवयानी यथा ययातिं परिणीतवती तथैव अहम् अपि ययातिं परिणेष्यामि' इति चिन्तयन्ती कदाचित् अशोकवनं गत्वा ययातिम् उक्तवती – "राजन् ! देवयानी मम स्वामिनी। तस्याः पतिः भवान् मम अपि पतिसमानः। अतः कृपया मां वृणोतु" इति।

एतद्विषये शुक्राचार्यः किं वदेत् इति किञ्चिदिव भीतः ययातिः। तथापि शर्मिष्ठायाः आशां तिरस्कर्तुम् अनिच्छन् ययातिः तां परिणीतवान्। शर्मिष्ठा ययातितः द्रुह्युम् अनुं पूरुं च पुत्रत्वेन प्रासवती।

शर्मिष्ठा पुत्रवती जाता इति विषयः

देवयान्या ज्ञातः। सा शर्मिष्ठायाः समीपं गत्वा तां पृष्टवती - "भवती नीतिमती शीलवती सत्कुलप्रसूता च इति सर्वे प्रशंसन्ति। एवं स्थिते विवाहं विना अपि कथं भवती पुत्रवती जाता ?" इति।

तदा शर्मिष्ठा लज्जया शिरः अवनमय्य उक्तवती - "कश्चन महामुनिः आगत्य पुत्रदानेन माम् अनुगृहीतवान्" इति।

एतत् श्रुत्वा देवयानी सकुतूहलं पृष्टवती - "कः मुनिः सः ? किं च तस्य नाम ? तस्य कुलं च किम् ?" इति।

तदा शर्मिष्ठा उक्तवती - "तस्य महानुभावस्य दिव्यं तेजः पश्यन्ती अहं तस्य कुलगोत्रादिकं प्रष्टुं न इष्टवती" इति।

एतत् श्रुत्वा देवयानी समाधानं प्राप्तवती।

कदाचित् ययातिः देवयान्या सह विहारार्थं शर्मिष्ठायाः वासस्थानसमीपं गतवान् । तदा देवयानी वस्तुस्थितिं ज्ञातवती। शर्मिष्ठापुत्रेषु ययातेः साम्यं दृष्ट्वा देवयानी शर्मिष्ठायाः पुत्रान् पृष्टवती - "भवतां पिता कः ? सत्यं वदन्तु" इति।

तदा ते पुत्राः ययातिं दर्शितवन्तः।

एतत् श्रुत्वा देवयानी शर्मिष्ठां क्रोधेन पश्यन्ती - "किं रे ! मद्विषये एव द्रोहम् आचरति वा भवती ?" इति पृष्टवती।

तदा शर्मिष्ठा किञ्चिदपि अविचलिता धैर्येण एव उक्तवती - "मया अधर्मः न आचरितः। भवत्या यथा राजा ययातिः परिणीतः, मया अपि तथैव सः परिणीतः। भवती मदपेक्षया ज्येष्ठा, ब्राह्मणस्त्री च। तदर्थं भवत्याः विषये मम गौरवम् अस्ति। किन्तु एषः ययातिः राजर्षिः। अतः एव मया पूर्वम् उक्तम् आसीत् यत् - कश्चन महामुनिः पुत्रदानं कृतवान् इति" इति।

शर्मिष्ठायाः वचनं श्रुत्वा देवयानी ययातिम् उद्दिश्य - "भवान् मह्यं द्रोहं कृतवान्। अतः अहं भवता सह न तिष्ठामि" इत्युक्त्वा पितुः शुक्राचार्यस्य समीपं गत्वा प्रवृत्तं सर्वं निवेदितवती।

एतस्मात् कुपितः शुक्राचार्यः 'वृद्धः भवतु भवान्' इति ययातिं शप्तवान्।



# र स वा र्ताः



## अदृष्टदेवतायाः अनुग्रहः

दरिद्रयोः कयोश्चित् अरब्दम्पत्योः एका पुत्री जाता । सा एकदिनाभ्यन्तरे एव कोटीश्वरी जाता । कथम् एतत् साध्यम् अभवत् ? इस्रेल्देशस्य टेल्-अवीव्नगरस्थे कस्मिंश्चित् चिकित्सालये मरियम् अलामोर् पुत्री प्रसूतवती । तस्याः नाम 'बलील्' । तेषु एव दिनेषु इस्रेल्देशे 'अदृष्टनक्षत्र' नामिका अदृष्टचिटिका आरब्धा आसीत् । मरियम् अलामोर् पुत्र्याः नाम्ना एकाम् अदृष्टचिटिकां क्रीतवती । तत्र विजयं प्राप्तवती बलील् १,०००,००० षेकेल् (३,३०,००० अमेरिकन् डालर्) धनं प्राप्तवती । तावत्पर्यन्तम् अपि निरुद्योगिनौ आस्तां बलील्मातापितरौ । इदानीं तौ अदृष्टदेवतातः प्राप्तेन धनेन प्रथमं 'मेका' गत्वा प्रार्थनां कृत्वा अनन्तरम् बलील्निमित्तं गृहमेकं क्रेतव्यम् इति चिन्तयन्तौ स्तः ।

## अतिप्राचीनम् अस्थिपञ्जरम्

चारित्रिकपूर्वयुगे डिनोसार्स्नामिकानां महागृहगोधिकानाम् अण्डानि अस्थिरूपेण परिवर्तितानि तत्र तत्र दृष्टिगोचराणि अभवन् इति वार्ता अस्माभिः पठिता एव । गते एप्रिल्मासे दक्षिणामेरिकादेशस्य पेरुनगरे ३,००,००० वर्षेभ्यः पूर्वतनम् अश्वस्य अस्थिपञ्जरं दृष्टिगोचरं जातम् । विज्ञानिनां संशोधनं यदि सत्यं स्यात्, तर्हि प्रपञ्चे एव तत् अतिप्राचीनं अस्थिपञ्जरम् इति ख्याति प्राप्नोति ।



## दशलक्षं कपोतचित्राणि

भारतीयः अध्यात्मगुरुः चिन्मयः न्यूयार्क्नगरे स्थिरं वसन् शान्तिसूचकानि दशलक्षं कपोतचित्राणि चित्रितवान् । सः फिजिद्वीपे यदा निवसति स्म, तदा स्वेन चित्रितं कपोतचित्रं रशियादेशस्य भूतपूर्वस्य अध्यक्षस्य गोर्बचेव्महोदयस्य पत्न्यै उपायनीकृतवान् आसीत् । सः वदति यत् - मया चित्र्यमाणं प्रत्येकं चित्रम् अपि मम हृदयस्य प्रार्थनां द्योतयति इति ।



# भाग्यवान् शिवः

कस्मिंश्चित् ग्रामे कश्चित् कृषिकः आसीत्। तस्य पुत्रः शिवः। पितुः पुत्रविषये किञ्चित् अपि प्रीतिः नास्ति। सः सर्वदा पुत्रं पीडयति। सर्वाणि गृहकार्याणि क्षेत्रकार्याणि च पुत्रद्वारा कारयति स्म पिता। शिवः कार्यशीलः। किन्तु तेन बहूनि कार्याणि क्रियते चेत् अपि पितुः तृप्तिः न आसीत्।

शिवस्य ग्रामे एव गौरी अपि निवसति। गौरी निर्धनकुलोत्पन्ना, किन्तु बुद्धिमती, कार्यशीला च। शिवः गौरी च परस्परम् अनुरक्तौ जातौ। तौ विवाहितौ भवितुम् इष्टवन्तौ। गौर्याः पिता तयोः विवाहम् अङ्गीकृतवान्। अनन्तरं शिवः स्वविवाहविषयं पितरम् उक्तवान्।

तदा शिवस्य पिता उक्तवान् - "भवान् आत्मानम् एव पोषयितुं कष्टम् अनुभवति। तादृशस्य भवतः विवाहः किमर्थम्?। मम अवलम्बनं विना यदि भवान् पत्नीं पोषयितुं समर्थः, तर्हि एव भवान् विवाहितः भवितुम् अर्हति" इति।

'गृहे अहं बहूनि कार्याणि करोमि। तथापि न किमपि प्रयोजनम् अस्ति। एतदेव कार्यम् अन्यत्र कुत्रापि क्रियते चेत् धनं सम्पादयितुं शक्यते' इति चिन्तयन् शिवः एकस्मिन् दिने पितरम् अनुक्त्वा गृहात् निर्गतवान्। गमनविषयं केवलं गौरीम् उक्त्वा गतवान् शिवः।

शिवः बहुदूरं गतवान्। एकम् अरण्यं प्राप्तवान्। तत्र काष्ठबन्धं शिरसि स्थापयित्वा गच्छन्ती काचित् वृद्धा दृष्टा शिवेन।

शिवः तां वृद्धाम् उक्तवान् - "अम्ब! भवती तु वृद्धा। भारं वोढुं न शक्नोति भवती। अतः तं काष्ठबन्धं ददातु। अहम् आनीय भवत्याः गृहं प्रापयामि" इति।

तदा वृद्धा काष्ठबन्धं शिवाय यच्छन्ती पृष्टवती - "वत्स! भवतः नाम किम्? कः

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा



ग्रामः भवतः ? कुत्र च प्रस्थितवान् भवान् ?'' इति।

तदा शिवः स्वविषयं विस्तरेण तां निवेद्य उक्तवान् - ''अम्ब ! उद्योगम् अन्विष्य प्रस्थितवान् अस्मि अहम् । किञ्चित् धनं सम्पाद्य अनन्तरं मम ग्रामं गमिष्यामि। गौरीं परिणेष्यामि च'' इति।

एतत् श्रुत्वा वृद्धा उक्तवती - ''भवान् कार्यम् अन्विष्य प्रस्थितः चेत् अन्यत्र गमनं किमर्थम् ? मम गृहे एव गृहकार्याणि करोतु । भवान् यावत् मम गृहे स्थास्यति तावत् भोजनं दास्यामि । वर्षान्त्ये भवते यत्किञ्चित् दास्यामि अहम्'' इति।

शिवः एतत् अङ्गीकुर्वन् उक्तवान् - ''तथैव भवतु । वृद्धायाः भवत्याः सेवाकरणेन मया पुण्यं प्राप्यते'' इति।

वृद्धायाः गृहे दोहनं, उद्याने शाकवर्धनम्, अरण्यं गत्वा काष्ठानाम् आनयनम् इत्यादीनि शिवस्य कार्याणि। शिवः वृद्धायाः गृहे श्रद्धया कार्यं करोति स्म। वृद्धा शिवाय दिने त्रिवारं पूर्णोदरं भोजनं ददाति स्म । एकं वर्षम् अतीतम् । तदा वृद्धा शिवम् उद्दिश्य - ''वत्स ! शिव ! वर्षं यावत् मया उक्तानि कार्याणि श्रद्धया कृतवान् भवान् । तदर्थम् अहम् अतीव सन्तुष्टा अस्मि। वर्षान्त्ये भवते किमपि ददामि इति मया उक्तम् आसीत् किल ! तदर्थम् एतं गर्दभं ददामि भवते । गर्दभं नीत्वा सुखेन जीवतु भवान्'' इति वदन्ती गर्दभं दर्शितवती।

वृद्धायाः एतत् वचनं श्रुत्वा शिवस्य मुखं कान्तिहीनं जातम् । 'गर्दभात् किं प्रयोजनम् ? तेन अहं पत्नीं कथं पोषयेयम् ? एषा वृद्धा मां वञ्चितवती' इति चिन्तितवान् शिवः।

खिन्नवदनं शिवं दृष्ट्वा वृद्धा हसन्ती उक्तवती - 'एतावत्पर्यन्तं भवतः द्वारा बहूनि कार्याणि कारयित्वा भवतः वञ्चनां कुर्यां वा अहम् ? गर्दभस्य द्वयोः कर्णयोः अपि आकर्षणं करोतु । मम आशयः कः इति भवान् एव ज्ञास्यति' इति।

अनन्तरं शिवः गर्दभसमीपं गत्वा तस्य कर्णौ आकृष्टवान्। तदा गर्दभः 'हा... ही...' इति उच्चैः शब्दम् अकरोत्। तदा अमूल्यानि रत्नानि पतितानि। एतत् दृष्ट्वा अतीव सन्तुष्टः शिवः वृद्धां नमस्कृत्य गर्दभस्य उपरि




उपविश्य स्वग्रामं प्रति प्रस्थितः ।

सायङ्कालसमये सः कञ्चित् ग्रामं प्राप्तवान् । तस्मिन् ग्रामे नन्दिनी अन्नदात्री इति प्रसिद्धा । शिवः नन्दिन्याः गृहं गत्वा - ''भगिनि ! अद्य रात्रिभोजनं ददातु । अद्य अत्र वासं कृत्वा श्वः प्रातःकाले एव इतः निर्गमिष्यामि अहम्'' इति उक्तवान् ।

नन्दिनी शिवस्य वचनम् अङ्गीकृतवती । नन्दिन्याः पुत्रः शिवस्य गर्दभं गृहस्य पुरोभागे विद्यमाने नारिकेलवृक्षे बद्धवान् ।

शिवः नन्दिन्याः गृहे भोजनं समाप्य शयनं कर्तुम् उद्युक्तः । तदा अन्नदात्री शिवम् उक्तवती - ''सहोदर ! भवान् प्रातः मम उत्थानतः पूर्वमेव गच्छेत् अपि । अतः भोजनस्य चत्वारि रूप्यकाणि इदानीम् एव ददाति चेत वरम्'' इति ।

तदा शिवः - ''क्षणं तिष्ठतु भगिनि ! इदानीम् एव आनयामि धनम्'' इति उक्त्वा बहिः गतवान् । गर्दभस्य कर्णौ आकृष्टवान् । तदा गर्दभः 'हा... ही...' इति शब्दं कुर्वन् रत्नानि पातितवान् । तानि रत्नानि स्वीकृत्य शिवः गृहस्य अन्तः आगतवान् । नन्दिन्यै एकं रत्नं दत्तवान् ।

नन्दिन्याः पुत्रः एतत् सर्वं दृष्टवान् । तस्य मनसि दुराशा उत्पन्ना । शिवः रात्रौ यदा गाढनिद्रायाम् आसीत्, तदा नन्दिन्याः पुत्रः नारिकेलवृक्षे बद्धं गर्दभं नीत्वा रहस्यस्थाने कुत्रापि बद्धवान् । अन्यं कञ्चित् गर्दभम् आनीय नारिकेलवृक्षे बद्धवान् । अनन्तरं सः शिवेन वस्त्रे यानि रत्नानि बद्ध्वा स्थापितानि आसन्, तानि अपि अपहृतवान् ।

शिवः अनन्तरदिने प्रातःकाले उत्थाय नारिकेलवृक्षे बद्धं गर्दभं स्वीकृत्य स्वगृहं गतवान् । सः गृहं गत्वा पितरम् उक्तवान् - ''तात ! पश्यतु । गर्दभः मया सम्पादितः । एतस्य कर्णौ आकर्षतु । तेन एतस्य वैशिष्ट्यं किम् इति भवान् स्वयमेव ज्ञास्यति'' इति ।

कृषिकः गर्दभस्य कर्णौ आकृष्टवान् । गर्दभः 'ही... ही...' इति शब्दम् अकरोत् । किन्तु रत्नानि न अपातयत्, अपि तु पादेन कृषिकं सम्यक् प्राहरत् ।

एतस्मात् कुपितः कृषिकः - ''हुँ, बुद्धिहीनः एषः गर्दभः । भवान् केनापि वञ्चितः अभवत् । भवतः मुखम् अपि द्रष्टुं न इच्छामि अहम् । गच्छतु इतः'' इति सम्यक्

तर्जितवान् पुत्रम्।

'एषा वञ्चना कथं जाता स्यात्' इति न ज्ञातवान् एव शिवः। पुनरपि सः उद्योगम् अन्विष्य प्रस्थितः। बहुदूरगमनानन्तरं किञ्चन अरण्यं प्राप्तवान् सः। तत्र एकः तक्षकः वृक्षतः उत्तमानि पीठानि कृत्वा नयन् आसीत्। शिवः तस्य समीपं गत्वा - "तात! भवान् वृद्धः अस्ति। भारं वोढुं सर्वथा न शक्नोति भवान्। ददातु। अहं भवतः गृहपर्यन्तं प्रापय्य गच्छामि" इति उक्तवान्।

अनन्तरं तक्षकः शिवस्य समग्रं विषयं श्रुत्वा उक्तवान् - "भवान् मम समीपे एकं वर्षं कार्यं करोति चेत् वर्षान्त्ये भवते किमपि दास्यामि अहम्" इति।

शिवः तक्षकस्य वचनम् अङ्गीकृत्य वर्षं यावत् सर्वकार्येषु अपि तक्षकस्य साहाय्यं कृतवान्। वर्षान्त्ये तक्षकः एकं कांस्यस्थालिकां शिवाय यच्छन् उक्तवान् - "एषा विशिष्टा स्थालिका अस्ति। 'अन्नं ददातु' इति पृष्टं चेत् मिष्टान्नभोजनम् एव दास्यति" इति।

शिवः तां स्थालिकाम् उद्दिश्य 'अन्नं ददातु' इति उक्तवान्। अपरक्षणे एव स्थालिका अन्नव्यञ्जनसारैः पूर्णा अभवत्। शिवः तत् खादित्वा तक्षकं नमस्कृतवान्। अनन्तरं स्थालिकां स्वीकृत्य स्वग्रामं प्रति प्रस्थितवान्।

मध्येमार्गं शिवः अन्नदात्र्याः नन्दिन्याः ग्रामं प्राप्तवान्। तावता सूर्यास्तः जातः। अतः सः नन्दिन्याः गृहं गत्वा ताम् उक्तवान् - "भगिनि! अद्य रात्रौ अत्र उषित्वा प्रातःकाले एव इतः गमिष्यामि अहम्"





इति।

तदा नन्दिनी - "भोजनं न आवश्यकं वा ?" इति पृष्टवती शिवम्।

"मम समीपे विशिष्टा स्थालिका अस्ति। भोजनं ददातु इति उक्तं चेत् सा भोजनं दास्यति" इति नन्दिनीं वदन् शिवः कांस्यस्थालिकाम् उद्दिश्य 'भोजनं ददातु' इति उक्तवान्। अपरक्षणे एव भोजनं सिद्धम्। ततः शिवः, नन्दिनी, नन्दिन्या पुत्रश्चापि मिलित्वा भोजनं कृतवन्तः। अनन्तरं शिवः निद्रां कृतवान्।

रात्रौ शिवः यदा गाढनिद्रायाम् आसीत्, तदा नन्दिन्याः पुत्रः निश्शब्दम् उत्थाय शिवस्य विशिष्टां स्थालिकां स्वीकृत्य तस्मिन् स्थाने आकारेण तादृशीम् एव अपरां काञ्चित् स्थालिकां स्थापितवान्।

अनन्तरदिने प्रातःकाले शिवः स्थालिकां स्वीकृत्य गृहं गतवान्। स्थालिकां पित्रे प्रदर्शयन् तस्याः महिमवर्णनं च कुर्वन् स्थालिकाम् उद्दिश्य - "अन्नं ददातु" इति उक्तवान्। किन्तु स्थालिका अन्नं न दत्तवती एव। "अन्नं ददातु" इति तेन बहुधा पृष्टे चेत् अपि स्थालिका रिक्ता एव आसीत्।

एतस्मात् खिन्नः शिवः पुनरपि उद्योगान्वेषणार्थं प्रस्थितः। मध्येमार्गं काचित् नदी लब्धा शिवेन। तस्याः नद्याः तीरभागे कश्चन महान् वृक्षः आसीत्। वृद्धः कश्चित् परशुना वृक्षस्य च्छेदने मग्नः आसीत्। एतत् दृष्ट्वा शिवः पृष्टवान् - "तात ! भवान् किमर्थम् एतं वृक्षं पातयन् अस्ति ?" इति।

"एतस्याः नद्याः सेतुनिर्माणार्थम्" इति उक्तवान् वृद्धः।

तदा शिवः - "परशुं ददातु। अहं करोमि च्छेदनकार्यम्" इति वदन् वृद्धतः परशुं स्वीकृत्य बलेन द्वित्रवारं वृक्षं ताडितवान्। तदा वृक्षः नदीप्रवाहस्य अवरोधपूर्वकं पतितः। तेन सेतुः निर्मितः जातः।

एतस्मात् सन्तुष्टः वृद्धः - "वत्स ! माम् उपकृतवान् अस्ति भवान्। तदर्थम् एतत् स्वीकरोतु" इति वदन् वृक्षशाखया निर्मितं वेत्रमेकं शिवाय दत्तवान्।

वृद्धः पुनरपि उक्तवान् - "वत्स ! एतत् वेत्रं न सामान्यम्। भवान् वेत्रम् उद्दिश्य यं कमपि ताडयतु इति वदति चेत्, भवतः

वचनं पालयति एतत् वेत्रम् । एतस्य उपयोगः महान् अस्ति भवतः'' इति।

एतत् श्रुत्वा शिवः आश्चर्यचकितः। सः वेत्रम् उद्दिश्य - 'वायुं ताडयतु' इत्युक्तवान्। अपरक्षणे एव वेत्रं वेगेन वायौ अटन् वायुं ताडयितुम् आरब्धवान् । क्षणकालानन्तरं शिवं तत् वेत्रं स्वीकृतवान्।

शिवः क्षणकालं चिन्तितवान् । सः ऊहितवान् यत् - मदीयः गर्दभः स्थालिका च अन्नदात्र्याः नन्दिन्याः गृहे एव अस्ति इति, सा एव चौर्यं कृतवती इति च।

ततः शिवः वेत्रं स्वीकृत्य साक्षात् अन्नदात्र्याः नन्दिन्याः गृहं गत्वा - ''किं भगिनि ! कुशलिनी वा भवती ?'' इति पृष्टवान्।

''कः भवान् ? इतःपूर्वं कदापि मया न दृष्टः खलु भवान् ?'' इति अपरिचितभावं प्रकटयन्ती उक्तवती नन्दिनी।

तावता तत्र आगतः नन्दिन्याः पुत्रः अपि - ''आम् । अम्ब ! भवत्याः वचनं समीचीनम् । एषः कदापि न दृष्टः आवाभ्याम्'' इति उक्तवान् ।

तदा शिवः - ''मम गर्दभं स्थालिकां च चोरितवन्तौ खलु भवन्तौ ? इदानीं स्मरणे आगतं वा ?'' इति पृष्टवान्।

एतत् श्रुत्वा नन्दिन्याः पुत्रः उक्तवान् - ''अस्माभिः भवदीयं वस्तु किमपि न चोरितम्'' इति।

एतेन कुपितः शिवः उक्तवान् - ''वेत्र ! एतं ताडयतु'' इति। अनुक्षणं शिवस्य हस्ते विद्यमानं वेत्रं वायौ डयमानं सत् आगत्य नन्दिन्याः पुत्रं बलेन अताडयत्।

एतत् दृष्ट्वा नन्दिनी शिवम् उद्दिश्य - ''कृपया क्षाम्यतु । अज्ञानेन किमपि आचरितम् आवाभ्याम् । मम पुत्रं रक्षतु कृपया'' इति वदन्ती पश्चात्तापेन शिवस्य पादयोः पतितवती। तदा शिवः - ''वेत्र ! अत्र आगच्छतु'' इति उक्तवान्। वेत्रं शिवस्य आज्ञाम् अपालयत्।

अनन्तरं शिवः गर्दभं स्थालिकां वेत्रं च स्वीकृत्य स्वग्रामं गतवान्। गौरीं परिणीय बहुकालं यावत् सुखेन जीवितवान्।





# विस्मरणशीलता

रङ्गपुरवासी रङ्गनाथः शीघ्रकोपी। सः विना कारणं पत्न्याः विषये कोपं प्रदर्शयति स्म, तां तर्जयति स्म च। तस्य पत्नी सीता विस्मरणशीला। एतेन रङ्गनाथस्य कोपः दिने दिने वर्धते स्म। तस्य कोपं शमयितुं कोऽपि न शक्नोति स्म।

रङ्गनाथः यदा पत्नीम् उच्चस्वरेण तर्जयति, तदा प्रतिवेशिनः तौ दृष्ट्वा उपहसन्ति स्म। पतिः कोपेन तर्जयति चेत् अपि सीता खिन्ना न भवति स्म। किन्तु रङ्गनाथस्य व्यवहारेण प्रतिवेशिनः उपहसन्ति इति यत्, तेन नितरां खेदम् अनुभवति स्म सा। किन्तु सा पत्युः कोपशमनोपायं न जानाति स्म।

कदाचित् सायङ्कालसमये रङ्गनाथः क्षेत्रतः आगच्छन् पत्नीं पृष्टवान् - "प्रातः क्षेत्रं प्रति गमनसमये मम वस्त्राणि क्षालयतु इति मया उक्तम् आसीत्। क्षालितवती वा भवती?" इति।

तदा सीता - "हा हन्त! विस्मृतवती एव खलु! इदानीम् एव क्षालयामि" इति उक्तवती।

एतत् श्रुत्वा क्रुद्धः रङ्गनाथः - "प्रातः एव मया उक्तं किल - 'विवाहार्थं गन्तव्यम् अस्ति। क्षालितानि वस्त्राणि न सन्ति। वस्त्राणि क्षालयतु' इति। एतदेव मलिनं वस्त्रं धृत्वा यदि विवाहगृहं गच्छामि, तर्हि मम अपमाननं खलु! हुं, भवतीं परिणीतवान् इत्यतः एतादृशम् अपमाननं सर्वं सोढव्यम् एव मया" इति तर्जितवान्।

रङ्गनाथस्य एतं कोलाहलं श्रुत्वा प्रतिवेशिनः द्वारे स्थित्वा उपहासपूर्वकं मन्दहासं प्रकटय्य अन्तः गतवन्तः। एतेन सीता अतीव अपमानिता। अपमानेन दुःखितायाः तस्याः नेत्रतः अश्रूणि आगतानि।



स्वदुःखं कथमपि निरुध्य सीता पतिम् उक्तवती - ''श्वः किल विवाहः ? इदानीम् एव वस्त्राणि क्षालयित्वा प्रसारयामि। श्वः प्रातःकालाभ्यन्तरे शुष्काणि भवन्ति वस्त्राणि। प्रातःकाले शीघ्रं प्रस्थाय विवाहार्थं गन्तुं शक्नोति भवान्'' इति।

तथापि रङ्गनाथस्य कोपः न शान्तः। सः पत्नीम् - ''इदानीं किमपि मा वदतु भवती। एतानि मलिनानि वस्त्राणि एव धृत्वा इदानीम् एव विवाहगृहं गमिष्यामि अहम्। अपमाननम् अनुभूय आगमिष्यामि च। अपमानितं मां दृष्ट्वा सन्तोषम् अनुभवतु भवती'' इति उक्त्वा ततः वेगेन निर्गतवान्।

रङ्गनाथस्य गमनानन्तरं प्रतिवेशिन्यः आगत्य सीतां सान्त्वयितुम् इच्छन्त्यः - ''सीते! भवती बहु कष्टम् अनुभवति। जगति का वा महिला एतावत् कष्टम् अनुभवन्ती अपि जीवितुम् इच्छेत्! कोपशीलपतिना सह कथं वा जीवनं यापयति भवती ? वयं चेत् आत्महत्याम् अकरिष्याम'' इत्युक्त्वा गतवत्यः।

प्रतिवेशिनीनां सम्भाषणेन सीतायाः दुःखं द्विगुणितम् अभवत्। सा निर्णीतवती यत् - इतःपरं पत्या रङ्गनाथेन सह जीवनं सर्वथा न शक्यते। अतः आत्महत्या एव शरणं मम इति। अनन्तरं सा आत्महत्याविषयं पत्रे विलिख्य मञ्चस्य उपरि स्थापयित्वा गृहात् प्रस्थितवती।

रङ्गनाथः अनन्तरदिने सायङ्काले विवाहादिकं समाप्य गृहम् आगतवान्। पत्न्याः पत्रं पठित्वा अतीव दुःखितः सः ग्रामे सर्वत्र पत्नीम् अन्विष्टवान्। किन्तु कुत्रापि सीतायाः शवः न प्राप्तः रङ्गनाथेन।

अनन्तरं रङ्गनाथः श्वशुरगृहं प्रति एतां वार्तां प्रापयितुम् इच्छन् तत्र गतवान्। वरण्डे एव रङ्गनाथस्य श्वशुरः परशुरामः उपविष्टवान् आसीत्। पत्नीविषयं श्रुत्वा किं वदेत् श्वशुरः इति भयम् अनुभवन् एव रङ्गनाथः श्वशुराय पत्न्याः पत्रं दत्त्वा रोदनम् आरब्धवान्।

परशुरामः पत्रं पठित्वा - ''रङ्गनाथ! ह्यः सायं भवता विवाहगृहं प्रति गमनानन्तरं प्रायशः सीता एतत् पत्रं लिखितवती। तन्नाम सा ह्यः एव आत्महत्यां कृतवती स्यात्।

किन्तु सीतासदृशी काचित् स्त्री मम गृहे अटन्ती अस्ति। तर्हि एषा का स्यात् ? सीता एव पिशाचीरूपेण आगता न स्यात् किल !" इति मन्दहासपूर्वकं पृष्टवान्।

तावता तत्र आगता सीता पितुः हस्ते विद्यमानं पत्रं तस्य पार्श्वे एव उपविष्टं पतिं च दृष्ट्वा शिरसि कण्डूयनं कुर्वती किमपि स्मृत्वा - "हा। आत्महत्यार्थं गृहात् प्रस्थिता अहम् अत्र आगतवती खलु ! मम विस्मरणं दिने दिने वर्धते। कोपाशीलपतिना सह जीवनं यापयितुं सर्वथा न शक्नोमि इतःपरम्" इति वदन्ती आत्महत्यां कर्तुं कूपसमीपं धावितवती।

एतत् दृष्ट्वा रङ्गनाथः अनुक्षणं धावन् गत्वा पत्न्याः सीतायाः हस्तौ गृहीत्वा - "तिष्ठतु सीते ! मम कोपः भवत्याः प्राणानां नाशकः अभविष्यत्। परन्तु भवत्याः विस्मरणकारणतः एव भवती अद्य रक्षिता अभवत्। मम कोपः भवत्याः प्राणापहारकः भविष्यति इति यदि अहं पूर्वमेव जानीयाम्, तर्हि निश्चयेन मयि परिवर्तनम् अभविष्यत्। इतःपरं कोपं त्यक्त्वा शान्तचित्तः भवितुं प्रयत्नं करोमि। कृपया मां क्षाम्यतु भवती" इति उक्तवान्।

तदा सीता पत्युः हस्तौ गृहीत्वा - "क्षमाशब्दस्य प्रयोगं मा करोतु कृपया। यतः, अहं भवदपेक्षया वयसा कनिष्ठा अस्मि। मम अपि दोषः महान् अस्ति। मयि विस्मरणशीलता अधिका अस्ति। इतःपरम् अहम् अपि मम दोषं समीकर्तुं प्रयत्नं करोमि" इति।

पतिपत्न्योः एतत् सम्भाषणं शृण्वन् आसीत् सीतायाः पिता परशुरामः। सः तयोः समीपम् आगत्य तौ उद्दिश्य उक्तवान् - "पतिपत्न्योः मध्ये सर्वदा सहकारः सहभावश्च अपेक्षितः। तदा एव कोपतापादयः स्वयम् एव न्यूनाः भवन्ति। पतिपन्त्योर्मध्ये प्रीत्यादरः एव भवेयुः सर्वदा। तयोर्मध्ये कदापि क्षमाप्रार्थनायाः आवश्यकता एव न स्यात्" इति।

परशुरामस्य एतत् वचनं श्रुत्वा रङ्गनाथः सीता च मन्दहासं प्रकटितवन्तौ।



# प्रकृतिवैचित्र्याणि

## शृगालमुखयुक्ताः जतुकाः



डयमानशृगालविषये श्रुतं वा भवद्भिः ? शृगालाः कथं वा डयनसमर्थाः भवेयुः इति चिन्तनं वा ? आम्। एते न शृगालाः, अपि तु जतुकाविशेषाः। एतासां मुखं शृगालमुखवत् भवति। अतः एव एताः डयमानशृगालाः इति उच्यन्ते। एताः अधिकतया मलेशियारण्येषु निवसन्ति। मृदूनि फलानि खादितुम् इच्छन्ति एताः। एतासां फलखादनरीतिः विचित्रा अस्ति। पक्षाभ्यां फलानि गृहीत्वा खादन्ति एताः। एतासां पक्षयोः दैर्घ्यं ४ फूट् परिमितम्। एतासां प्रमुखः आहारः फलानि इति कारणतः सुलभतया गृहे एव एतासां पालनं शक्यम्। एतासां वासार्थं बृहत् नीडम् आवश्यकम्। पोषणानन्तरम् एताः गृहं त्यक्त्वा न गच्छन्ति। अन्याः जतुकाः इव एव एताः अपि सदा अधोमुखं लम्बमानाः तिष्ठन्ति।

## अपायकराणि शिलीन्ध्राणि



सामान्यतः सर्वस्य अपि सस्यस्य वर्धनार्थं प्रकाशः अत्यावश्यकः। किन्तु शिलीन्ध्राणां वर्धनार्थं प्रकाशः एव न आवश्यकः। वृष्टिकालसमये प्रातःकाले वाटिकां प्रविशामः चेत् तत्र तत्र शिलीन्ध्राणि अस्माकं दृष्टिगोचराणि भवन्ति। सामान्यतः बालाः विनोदार्थम् एतादृशानि शिलीन्ध्राणि उत्पाट्य नाशयन्ति। एतेषु शिलीन्ध्रेषु कानिचन अपायकराणि विषयुक्तानि च भवन्ति। तादृशानां शिलीन्ध्राणां स्पर्शमात्रेण एव कण्डूयनम् आरभ्यते। अनारोग्यम् अपि सम्भवति। शिलीन्ध्रेषु किम् उत्तमम्, किम् अनुत्तमम् इति अनुभविनः केवलं ज्ञातुं समर्थाः भवन्ति। अतः विशेषतया शिलीन्ध्राणां विषये बालैः जागरूकैः भवितव्यम्।

## सूर्यस्य मरणम्



सूर्यगोलकेन्द्रं जलजनकरहितं कदा भवेत् ? ऊहितुं शक्नुवन्ति वा भवन्तः ? यदि तत् जलजनकरहितं भवति तर्हि अणुस्फोटकारणतः सूर्यगोलः महाकारं प्राप्य रक्तवर्णं प्राप्नुयात्। तदा भूगोलः भस्मीभूतः भवेत्। अनन्तरं च सूर्यगोलः इदानीन्तनसूर्यगोलस्य शतगुणितपरिमाणेन बृहदाकारं प्राप्य अन्तरिक्षे अङ्गुलीयकाकारेण धूमं निस्सारयेत्। किन्तु एतत् सर्वं कदा सम्भवेत् ? कोटिवर्षाणाम् अनन्तरम् एतत् सम्भवेत् इति मेधाविनः विज्ञानिनः वदन्तः सन्ति।

Say "Hello" to text books and friends
'Cause School days are here again
Have a great year and all the best
From Wobbit, Coon and the rest!
















THE

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

### विजितां शीर्षिकाम् नवम्बर् - ९४ मासे प्रकटयिष्यामः ।



S.G. SESHAGIRI



S.G. SESHAGIRI

• उपरितनं चित्रद्वयं पश्यन्तु । • युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा सप्टम्बर् - २० तः पूर्वम् एव प्रेषयन्तु । • अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । • स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । • शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । • अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८**

---

### 'जुलै' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

**प्रथमचित्रम् - बन्धुदर्शनातुरया प्रतीक्ष्यते जन्मस्थलम् ।**

**द्वितीयचित्रम् - उत्सवाचरणव्यग्रया अलङ्क्रियते गृहाङ्गणम् ।**

प्रेषकः - बालव्यासः सुव्रतवल्लभदासः, श्री स्वा.गु.सं. विद्यालयः, कण्हारी, बडौदा - ३९१२१०




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दामामा



**प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में –**

आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड

मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु

**–और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती**

**चन्दे की दरें (वार्षिक)**

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 105.00 वायु सेवा से रु. **252.00**

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,**
**पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 111.00 वायु सेवा से रु. **252.00**

अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा
'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.

